श्रीरस्तु श्रीगुरुभ्यो नमः शुभमस्तु

श्रीः

सर्वं खल्विदं ब्रह्म

# माथुरीव्याप्तिपञ्चकम् ।

## भास्करीटीकायुतम् ।



टीकाकारः

पण्डितराजः, नव्यन्यायाचार्यः, तर्कतीर्थः, तर्कमनीषी, वेदान्ततीर्थः काव्यविनोदः


## श्रीआणेपुवेङ्कटरमणमूर्तिशास्त्रिशर्मा

वेदान्ताध्यापकः

कलकत्ताराजकीयसंस्कृतमहाविद्यालयः

y-5

श्रीरस्तु श्रीगुरवे नमः शुभमस्तु

श्रीः

सर्वं खल्विदं ब्रह्म

# माथुरीव्याप्तिपञ्चकम् ।

## भास्करीटीकायुतम् ।



टीकाकारः

पण्डितराजः, नव्यन्यायाचार्यः, तर्कतीर्थः, तर्कमनीषी, वेदान्ततीर्थः

काव्यविनोदः

## श्री आणेपु वेङ्कटरमणमूर्तीशास्त्रिशर्मा

वेदान्ताध्यापकः

कलिकत्ताराजकीयसंस्कृतमहाविद्यालयः

सम्पादकः

न्यायवेदान्ताचार्य, दर्शनाचार्य, शास्त्रनिधीत्यादि बहुबिरुदभाजां

ब्रह्मश्री मद्दुलपल्लिमाणिक्यशास्त्रिणां

प्रियशिष्यः

आन्ध्रविश्वविद्यालयसंस्कृतविभागप्राध्यापकः

डा. ओरुगन्टिश्रीरामलालशर्मा

## महतां विपश्चिदपश्चिमानामभिप्रायाः

Mahamahopadhyaya
Gopi Nath Kaviraj, M.A.,
D.Litt.

2A SIGRA.
BENARAS,
DATED 13. 3.49

शुभाशीर्भाज श्रीमता वेङ्कटरमणमूर्तिना स्वरचितस्य माथुरीव्याप्तिपञ्चक-विवृत्याख्य ग्रन्थस्य कानिचित् पत्राणि मत्सविधे समवलोकनार्थं प्रेषितानि। परन्तु अवकाशाभावात् सम्यक्तया निरीक्षितुमसमर्थेन मया यथावसरं तानि कचित् कचित् सामान्यतो दृष्टानि। ग्रन्थकृतो व्याख्यानसरणिर्विशदा। तत्र तत्र मूलस्य तात्पर्याविष्करणे कुशला मन्दमतीनां बोधसौख्यविधायिनी चेति सर्वथा प्रशंसनीया। विवृतिरियं विशुद्धतया मुद्रिता प्रकाशिता चेद् बहूनामुपकाराय भविष्यतीति विश्वसिमि।

कविराजोपाह्वः
गोपीनाथदेवशर्मा



श्रीश्रीश्री विश्वेश्वरो विजयत

३२,१७१ नं.देवनाथपुरा।
काशीधाम 14.4.49.

वाराणसीपण्डितसभासम्पादकः
'महामहाध्यापकः' 'न्यायकेसरी' श्रीवामाचरणभट्टाचार्यः
न्यायाचार्यः,काशीहिन्दूविश्वविद्यालयन्यायशास्त्रप्रधानाध्यापकः

न्यायाचार्योपाधिकेन श्रीमता वेङ्कटरमणमूर्तिशास्त्रिणा विनिर्मितायाः माथुरीव्याप्तिपञ्चक भास्करीटीकाया अंशविशेषमवलोकयता मया मन्यते तावदियं मन्दमतीनामप्यनायासमध्ययना- दिकं सम्पादयतीति प्रमाणयति।

ज्येष्ठकृष्णतृतीया

वामाचरणभट्टाचार्यः

Office of the Principal,
Govt.Sanskrit College,
BENARAS,
10.5.1951.

I have read the commentary called "Visvanatha" both on the Kena Upanishad and Bhaskara commentary on the Madhuri vyapthi- anchakam of the famous Gadadhara Bhattacharya by Pandit VenkataRamana Murty Sastry of Marwadi Sanskrit Vidyalaya, Benaras.In both these commentaries he shows his deep acquaintance with sanskrit philosophical literature and his ability to explain his ideas in lucid sanskrit.Though his special subject is Nyaya,he is familiar with the other systems also.I have also heard him lecturing in different Gosthis which were held in the college in the past 6 months. He speaks sanskrit fluently and contributes something new to the discussion.I hope that, his manuscrpits will be published some day.



काशीरामशर्मा
भूतपूर्वसंयुक्तप्रान्तीयसंस्कृतपाठशालानिरीक्षकः

श्रीमदाणेपुवेङ्कटरमणमूर्तिशास्त्रिणा रचितां भास्करविवृतिनाम्नीं माधुरीव्याप्तिपञ्चक टीकामवालोकयम्। इयं ललितमधुरसुगमभाषया कठिनस्थलानां सर्वेषामर्थं तात्पर्यञ्च मन्दमतीनामपि विनैव प्रयासं बोधयतीति विशेषप्रशंसार्हा बहूनामुपकारं विदध्यादिति विश्वसिमि।

श्रावणकृष्णतृतीया
विक्रमसंवत् २००६

काशीरामशर्मा

MAHAMAHOPADHYAYA ,
SASTRA RATNAKARA
Pandit A . CHINNASWAMI SASTRI

17, HANUMAN GHAT,
BENARAS CITY,
2.5.1949.

श्रीमता पण्डितवरेण वेङ्कटरमणमूर्तिमहोदयेन विरचितां माधुरीव्याप्तिपञ्चकम् भास्करनाम्नीं विवृतिमितस्ततोऽवालोकयं स्थालीपुलाकन्यायेन। सा न केवलं ग्रन्थाशयं चारुतरं विवृणोति, भाषायामपि सारल्यं प्रागल्भ्यञ्च यथोचितं भजते। अतोऽधीतिनामध्यापकानामपि यथासम्भवं ग्रन्थार्थगूढतात्पर्यज्ञाने च साधूपकुर्यादिति मे सुदृढो विश्वासः। अतो यदि कश्चिदिमां विवृतिं मुद्राप्य प्रकाशयेत् स न केवलमात्मनः, विद्वद्वर्गस्य छात्रसङ्घस्य च गीर्वाणवाण्यां परिचयं दधतो महतीमुपकृतिमादध्यादिति विश्वसन् यूनोऽस्योत्साहिनः प्रगल्भपण्डितस्य सर्वपथीनां समुन्नतिमाशासानो भगवन्तमुमापतिमभ्यर्थये एनं सुदीर्घेणायुषा विपुलेन च श्रेयसा संयोजयितुम्।

वैशाखशुक्लचतुर्थी

२००६. (वैक्रमसंवत्)

चिन्नस्वामिशास्त्री



## माथुरीव्याप्तिपञ्चलक्षण्याः

### पण्डिताभिप्रायः

तर्कवेदान्ताचार्य, दर्शनाचार्य,

तर्कवेदान्तसाम्राट्, शास्त्रनिधि,

तर्कनिधि, राष्ट्रपतिसम्मानित,

ब्रह्मश्रीमद्दुलपल्लि माणिक्यशास्त्रिणामभिप्रायः

मथुरानाथपञ्चलक्षण्याः मम अत्यन्तं सहृत्तमैः यशःकायैः ब्रह्मश्रीआणेपुवेङ्कटरमणमूर्तिशास्त्रिशर्मभिः विरचिता "माथुरी भास्करी" गुणादोष परिशीलदृष्ट्या समवलोकिता। ततः ममहृदि महती सन्तुष्टि स्समजनि। आन्ध्रदेशे माथुरी पञ्चलक्षण्याः प्रचारः तत्र गङ्गानिर्झरणीव्याख्या, अस्मद्देशे सुप्रसिद्धैः ब्रह्मश्री सङ्गमेश्वरशास्त्रिचरणैः रचितं शतकोटि क्रोडपत्रमप्यस्ति। तत्र शतकोटि क्रोडपत्रे साध्यतावच्छेदकावच्छिन्नत्वमित्यत्र शतकोटयः विरचिताः, पञ्चस्वपिलक्षणेषु शास्त्रार्थानुकूलतया महान्विचारः कृतोऽस्ति। तादृशबहुक्रोडपत्रोपेतां माथुरीपञ्चलक्षणीं बहुपर्यायमहमपाठयम् तथापि ईदृशी सरलव्यख्या न दृष्टा अत्यन्तं सरला एषा भास्करीव्यख्या, भास्करालोके पदार्थावलोकनमिव, भास्करीव्यख्यावलोकने पञ्चलक्षणीपदार्थावलोकनमपि सुकरमिति मम मनस्यभात्।

अद्यतनानामन्तेवासिनां, विस्मृतशास्त्राणां अपि पदार्थावलोकनाय अत्यन्तं सहकारिणी एषा व्याख्येत्यत्रनास्ति संशयलेशोऽपि, अतः एतद्व्याख्यासहित माथुरीपञ्चलक्षणी आन्ध्रपण्डित प्रवरैर्विरचिता, आन्ध्राभिमनिभिः पण्डितैः पठन पाठनक्रमे निवेशनीयेति निवेदयामि। शास्त्रिवर्याणां धर्मपत्नी भार्तृपादसरोजभृङ्गायमाना साध्वीमणिः पतिदेवानां पाण्डित्यं स्मरन्ती तद्विरचितग्रन्थमुद्रणे बहुद्रव्यं विनियोज्य प्रवर्तते शान्तादेवी इत्यपि मम मनसि सन्तुष्टिः जाता।

विजयवाडा
श्री विक्रम आषाढ पूर्णिमा

एवं निवेदयति,
मद्दुलपल्लि माणिक्यशास्त्री

# प्राक्कथनम्

गोतमादिसमारम्भां गङ्गेशार्यादिमध्यमाम् ।
माणिक्यशास्त्रिपर्यन्तां वन्देगुरुपरम्पराम् ।।

धर्मार्थकाममोक्षाख्येषु चतुर्विधपुरुषार्थेषु मोक्षएव परमपुरुषार्थः तस्यैवनित्यत्वात्। तच्च ''नच पुनरावर्तते'' इति श्रुत्या ज्ञायते। मोक्ष हेतुं निरुपयितुमेव दर्शनानामुद्भवः। सत्स्वपि अनेकेषु दर्शनेषु न्यायदर्शनं मोक्षप्रदायि ईश्वरोपासनारूपाच्च अतएवोक्तं श्रीमदुदयनाचार्यैः।

'' न्यायचर्चेयमीशस्य मननव्यपदेशभाक् ।
उपासनैव क्रियते श्रवणानन्तरागता । इति ।''

पदार्थविचारात्माकमिदं दर्शनं इतरदर्शनाकृष्टं इत्यत्रनास्तिसंशयलेशः, अतएव इतरदर्शनेष्वपि न्यायदर्शनविचारधारैव बहुत्रदृश्यते। प्रत्यक्षप्रमाणानवगतस्य लौकिकालौकिवस्तुनः साधकत्वेन, इतरप्रमाण प्रामाण्यसाधकत्वेन च अनुमानप्रमाणस्य अभ्यर्हितत्वमस्मिन्दर्शने दृश्यते।

गङ्गेशोपाध्यायप्रभृति अनुमानप्रमाणविषये महतीचर्चा कृता। चिन्तामणिकाराणां गङ्गेशोपाध्यायानां महत्त्वं तेषां ग्रन्थानां व्याख्यापरम्परयैव ज्ञायते। सत्स्वप्यनेकेषु व्याख्यानेषु मथुरानाथैःकृता रहस्यटीका अतीव गभीरा विद्यते। अतएव औत्तराहैः आन्ध्रैश्च वादग्रन्थेषु इदंप्रथमतया माथुरी पञ्चलक्षणी एव पठ्यते। कालवशात् इदानीन्तनानां तादृशं सामर्थ्यं नास्ति यादृशं सामर्थ्यं प्राचीनानां आसीत् विना व्यख्यानं गुरुमुखादेव सर्वं अवगतमासीत्। अनायासेन पिपठिषूनां सरळव्याख्या आवश्यकी एतादृशीं अवस्थां पञ्चाशद्वर्षेभ्यः प्रागेव अनुमाय ब्रह्मश्रीयुतैः आणेपु वेङ्कटरमणमूर्तीशास्त्रिशर्मवर्यैः भास्करी नाम्नी टीका रचिता।

अस्याःटीकायाः प्रणेतारः ब्रह्मश्री आणेपु वेङ्कटरमणमूर्तीशास्त्रिशर्मणः आन्ध्रप्रदेशे लब्धजन्मानः इमे बाल्येवयसि सकलविद्यानगर्यां वाराणस्यां ब्रह्मश्री तर्करत्न पञ्चाननभट्टाचार्य, ब्रह्मश्री गोस्वामिदामोदरशास्त्रिप्रभृतिपण्डित प्रकाण्डानां सन्निधौ न्यायवेदान्तादिशास्त्राण्यधीतवन्तः। तदनु नव्यन्यायाचार्य, तर्कतीर्थ, तर्कमनीषी, वेदान्ततीर्थ, काव्यविनोदेत्याद्यनेकोपाधीन् सम्प्रापुः। वाराणसीस्थ मार्वाडी संस्कृतविद्यालये दर्शनशास्त्राध्यापकरूपेणस्थिताः अध्ययनादिषु शिष्यानां

क्लेशमन्वीक्ष्य यथा सुबोधो भवेत्तथाऽतिसरलानि व्याख्यानानि विरच्य शिष्याननुगृहीतवन्तः । तदनन्तरं १९०१ ख्रीस्ताब्दे कलिकत्तानगरस्थ कलिकताराजकीयसंस्कृतकलाशालायां वेदान्ताध्यापकत्वेन नियुक्ताः अचिरेणैव कालेन विश्वनाथसायुज्यं गताः।

ततः प्रभृति एतावत्पर्यन्तं लिखितग्रन्थान् तेषां गुरुवरेण्यानां ब्रह्मश्री पञ्चाननतर्करत्नभट्टाचार्याणां पौत्राः, ब्रह्मश्री जीवन्यायतीर्थमहाशयानां पुत्राः, ब्रह्मश्री जानकीजीवनभट्टाचार्याः संरक्षितवन्तः ।

अस्य ग्रन्थस्य मुद्रणविषये मम सहयोगं स्वीकृतवद्भ्यः श्री आणेपु वेङ्कटरमणमूर्तिशास्त्रिशर्म-वर्याणां कुटुम्बसभ्येभ्यः कृतज्ञतां निवेदयामि ।

इत्थं

आन्ध्रविश्वविद्यालयः — बुधजनविधेयः

श्री विक्रम आषाढ पूर्णिमा — सद्गुरुपादरेणुः

१६-७-२००० — ओरुगन्टि श्रीरामलाल शर्मा



## नमस्सुमाञ्जलिः

महोदयाः!

श्रीमता तर्कमार्तण्डेन मथुरानाथ तर्कवागीशेन विनिर्मितस्य, ''व्याप्तिपञ्चकं''नामकस्य ग्रन्थस्य, ''भास्कर'' नाम्नी टीका सम्प्रति मुद्राप्य प्रकाश्यमाना विद्योतते। इयं तावत् मत्पतिदेवश्रीआणेपुवेङ्कटरमणमूर्तिशास्त्रिशर्मविरचितासु ईदृशीषु टीकासु अन्यतमा। इतः पूर्वम् ईश , केन, कठ, प्रश्न, माण्डूक्याख्य उपनिषत्पञ्चकस्य, जागदीशीपञ्चलक्षण्याः, प्रामाण्यवादस्य च टीकाः प्रकटिताः। तदिदं माथुरीव्याप्तिपञ्चकटीकाप्रकाशनमपि भगवदनुग्रहस्य महताञ्चाशीर्वादस्य फलमेवेति सम्भावयामि।

श्रीमत्परमहंसपरिव्राजकाचार्याः यमनियमाद्यष्टाङ्गयोगनिष्ठागरिष्ठाः, पदवाक्यप्रमाणपारावारपारीणाः दक्षिणाम्नायश्रीशृङ्गगिरि शारदापीठाधीश्वराः सर्वतन्त्रस्वतन्त्राः अस्माकंसाक्षात्शारदामूर्तयः श्रीश्रीश्री भारतीतीर्थ महास्वामिनःएतं टीकाग्रन्थं सम्पाकलस्य,अस्य प्रकाशनाय स्वीयशुभाशीरनुग्रहं कृतवन्तः। तच्चरणकमलसन्निधौ सप्रश्रयादरप्रणामशतानि।

अथ पञ्चाशद्वर्षपर्यन्तं स्वगृहे एतासां टीकानां मूलप्रतिकृतीः (हस्तलिखिताः) न्यासीकृतं निधिमिव संरक्षितवान् श्रीजानकीजीवनभट्टाचार्यः (मद्भर्तुगुरुचरणानां श्रीपञ्चानन-तर्करत्नभट्टाचार्याणां पौत्रः अयम्)। तत्पुत्रःआयुष्मान् चि. भावानीजीवनभट्टाचार्यः तथैव संरक्ष्य प्रकाशनाय प्रत्यर्पितवान् यथातथम्। अतः तस्मै मदीयामाशिषं कृतज्ञताञ्च परां निवेदयामि।

विश्वेऽस्मिन् भगवदनुग्रहेण जन्मान्तरसुकृतपरिपाकेन जन्मना विद्याया शीलेन च विलसन्ति केचनैव गुणोत्तराः पुरुषाः। योगिराजानां श्री रामलालप्रभु श्रीचरणानां अन्तेवासितया प्रसिद्धानां श्री ओरुगंटिनरसिंहयोगिनां पितृचरणानां जन्मदातॄणां द्वितीयतनयेन, निरन्तर स्वाध्यायप्रवचन निष्णातानां न्यावेदान्ततीर्थभूतानां ब्रह्मश्री माणिक्यशास्त्रि श्रीचरणानां विद्याजन्मदातॄणां अन्येषाञ्च शिष्यत्वेन विनयविवेकादिसौशील्य वान् चि . रामलालशर्मा। एषः मत्पतिविरचित पञ्चलक्षण्यादि ग्रन्थानां परिष्करणे मुद्रणे च अत्यन्तं सहकारं कृतवान्। अस्मै चि. रामलालशर्मणे शुभायुरारोग्यसंपत्संततिं दद्यात् भगवान् काशीविश्वनाथः इति आशासे।

आणेपु भास्करशान्तादेवी
आषाढ पूर्णिमा
रविवासरः

श्रीरस्तु

श्री गणेशाय नमः

# माथुरी व्याप्तिपञ्चकम्

## चिन्तामणिः

नन्वनुमितिहेतुव्याप्तिज्ञाने का व्याप्तिः?

### माथुरीभास्करी

नत्वा गणपतिं देवीं भारतीं ज्ञानदायिनीम्।
अन्नपूर्णां महादेवं नमामि श्रीपतिं रमाम्।।

वेदादिविद्याविमलान्तरङ्गान् सङ्गाद्ददानान् सकलान् गुणौघान्।
अमोघवाग्वाञ्छितदानदक्षान् संस्तौमि विद्यागुरुपुङ्गवाँस्तान्।।

तनोमि टीकां मृदुभिर्वचोभिः श्रीभास्कराख्याम् विमलो विनीतः।
तद्व्याप्तिसत्पञ्चकमाथुरीकृतेर्वाञ्छन् सुबोधं पठतां जनानाम्।।

### चिन्तामणिभास्करी

नासङ्गतं ब्रूयादिति न्यायपरिपालनाय प्रनिरूपितप्रामाण्यानुमितिसङ्गतिं दर्शयन् व्याप्तिनिरूपणोपयोगिनीं जिज्ञासां दर्शयति ननु इत्यादिना गङ्गेशोपाध्यायः ।।

### माथुरी

अनुमानप्रामाण्यं निरूप्य व्याप्तिस्वरूपनिरुपणमारभते "नन्वित्यादिना"।

### माथुरीभास्करी

तत्र भवान् मथुरानाथभट्टाचार्यो व्याप्तिपञ्चकचिन्तामणिग्रन्थं व्याख्याति "अनुमानप्रामाण्यं निरुप्येत्यादिना"। अनुमानस्य प्रामाण्यं अनुमानप्रामाण्यं तत्, निरूप्य = प्रतिपाद्य, व्याप्तीति = व्याप्तेर्यत्स्वरूपं तस्य , निरूपणम् = ज्ञानबोधकशब्दप्रयोगः, तदारभत इति भावः ।

अस्यायमाशयः। अनुमानं न प्रमाणमिति वदतश्चार्वाकस्य मतनिरासाय अनुमानं प्रमाणमिति व्यवस्थाप्य व्याप्तिस्वरूपं दर्शयति मणिकार इति।

**माथुरी**

अनुमितिहेतु इत्यस्य अनुमाननिष्ठप्रामाण्यानुमितिहेत्वित्यर्थः। व्याप्तिज्ञान इत्यत्र च विषयत्वं सप्तम्यर्थः । तथाच अनुमाननिष्ठप्रामाण्यानुमिति हेतुव्याप्तिज्ञानविषयीभूता व्याप्तिः का इत्यर्थः । अनुमाननिष्ठप्रामाण्या-नुमितिहेत्वित्यनेन व्याप्तेरनुमानप्रामाण्योपपादकत्वकथनात् अनुमान-प्रामाण्यनिरूपणानन्तरं व्याप्तिनिरूपणे उपोद्घात एव सङ्गतिः सूचिता। उपपादकत्वञ्चात्र ज्ञापकत्वम्।

केचित्तु अनुमितिपदं अनुमितिनिष्ठेतरभेदानुमितिपरम् तथाचानुमिति निष्ठेतरभेदानुमितौ यो हेतुः प्रागुक्तव्याप्तिप्रकारकपक्षधर्मताज्ञानजन्य-ज्ञानत्वरूपस्तद्घटकं यद् व्याप्तिज्ञानं तदंशे विशेषणीभूता व्याप्तिः केत्यर्थः । घटकत्वार्थकसप्तम्या तत्पुरुषसमासात् तथाच प्रागुक्तानुमिति-लक्षणोपाद्घात एव सङ्गतिरनेन सूचिता इत्याहुः।

**माथुरीभास्करी**

अनुमितीति । ननु अनुमितिहेतुव्याप्तिज्ञाने का व्याप्तिरिति चिन्तामणिग्रन्थान्तर्गत अनुमितिहेतुपदस्य । अनुमाननिष्ठेत्यादि = अनुमाननिष्ठं यत्प्रामाण्यं तस्य या अनुमितिः अनुमाननिष्ठप्रामाण्यविधेयकानुमितिस्तस्या यो हेतुः, स चासौ व्याप्तिज्ञानं चेति कर्मधारयः। व्याप्तिज्ञाने इत्यत्र=ननु अनुमितीत्यादि चिन्तामणिमध्यगतं यद् व्याप्तिज्ञानं तत्र । ननु अनुमितीत्यादेः कः पर्यवसितार्थ इत्यत आह तथाचेति । तथाच=चिन्तामणिघटकपदानां तादृशार्थस्वीकारे, अनुमानेति=अनुमाननिष्ठं यत् प्रामाण्यं तस्य या अनुमितिस्तस्याः यो हेतुः, स चासौ यद्व्याप्तिज्ञानं तद्विषयीभूतेत्यर्थः। ननु व्याप्तिनिरूपणं प्रति जिज्ञासाया आवश्यकत्वे का व्याप्तिरिति जिज्ञासाया एव प्रदर्शनम् उचितं, न तु ''ननु अनुमितिहेतुव्याप्तिज्ञाने का व्याप्तिरिति'' जिज्ञासायाः प्रदर्शनम्, इत्यत आह अनुमानेत्यादि । अनुमाननिष्ठप्रामाण्यानुमितिहेत्वित्यनेन = अनुमाननिष्ठप्रामाण्यानुमितिरूपानुमिति-हेतुव्याप्तिज्ञान इत्यस्य कथनेन, अनुमानप्रामाण्योपपादकत्वकथनात्, अनुमानप्रामाण्य-निरुपणानन्तरं = अनुमानपक्षक प्रामाण्यविधेयकानुमितिसाधनानन्तरम्। ननु प्रामाणिकानां मते कारणत्वमेवोपपादकत्वपदार्थः । तथा च व्याप्तिविषयकज्ञानानुकूलशब्दप्रयोगात्मक व्याप्ति-निरूपणे तादृशप्रामाण्यानुमिति कारणत्वस्य असत्त्वात् कथमत्रोपोद्घातसङ्गतिरित्यत आह ''उपपादकत्वमिति''। अत्र=स्वग्रन्थे

। तथाच उपपादकत्वपदस्य लक्षणया ज्ञापकत्वार्थ-स्वीकारात् अस्य व्याप्तिनिरूपणे परम्परया सत्त्वेन न काप्यनुपपत्तिरिति।

अस्यायमाशयः। यो यन्निरूपणानन्तरं निरुप्यते तत् तन्निरूपितसङ्गति रपेक्षते, " यो यन्निरूपणानन्तरं निरुपणीयः स तन्निरूपितसङ्गतिमा"निति न्यायात्, तथाच व्याप्तिनिरूपणे सङ्गतेरप्रदर्शने विनेयानां श्रद्धा न स्यादतः सङ्गतिः प्रदर्शनीया, तथाच सङ्गतिप्रदर्शनार्थमेव का व्याप्तिरिति केवलमनुक्त्वा अनुमितिहेतुव्याप्तिज्ञाने का व्याप्तिरित्युक्तम् । एवमपि यावदनुमितिनिरुपितसङ्गतेर्व्याप्तिनिरूपणे असत्वादसङ्गतिः स्यात्, अतः, अनुमितिपदेन तादृशप्रामाण्यानुमितिरेव विविक्षिता । तथाच तादृशप्रामाण्यानुमितेर्व्याप्तिज्ञानमन्तरेण असम्भवात् तदर्थमेव व्याप्तिस्वरूपं निरूप्यत इति व्याप्तिनिरूपणे उपोद्घातसङ्गतिः अस्तीति ।

व्याप्तिनिरूपणे प्रामाण्यानुमितिनिरूपितसङ्गतिर्न स्वीक्रियते किन्तु प्रागुक्तानुमिति लक्षणनिरूपित सङ्गतिरेव स्वीक्रियत इति वदतां प्राचीनानां मतं दर्शयति केचित्त्वित्यादिना । अनुमितिपदं=अनुमितिहेतुव्याप्तिज्ञान इति चिन्तामणिघटकानुमितिपदम्, अनुमितिनिष्ठेति= अनुमितिनिष्ठो यः इतरभेदः तस्य यानुमितिः तद्बोधकम्। ननु एतावता कः पर्यवसितार्थ इत्यत आह तथाचेति । तथाच=तत्रानुमितिपदस्य अनुमितिनिष्ठेतरभेदानुमितिपरत्वे । तद्घटकम् = तादृशानुमितिहेतुघटकम्, तदंशे= व्याप्तिज्ञानांशे । घटकत्वेति । घटकत्वम् अर्थो यस्याः सा घटकत्वर्थाकसप्तमी तस्याः अनुमितौ यो हेतुरित्यत्रानुमित्युत्तरसप्तम्याः। ननु एतावता प्रकृते किमायातम् इत्यत आह तथाचेति । तथाच=अनुमितिपदस्य अनुमितिनिष्ठेतरभेदानुमितिपरत्वं स्वीकृत्य व्याख्याने, प्रागुक्तेति=प्रागुक्तं यदनुमितिलक्षणं व्याप्तिप्रकारकपक्षधर्मताज्ञान-जन्यज्ञानत्वरूपंलक्षणं तस्य , य उपोद्घातः = उपपादकत्वरूप उपोद्घाताख्यैव, सङ्गतिः= अनन्तराभिधानप्रयोजक जिज्ञासाजनकज्ञानविषयः, अनेन=अनुमितिहेतुव्याप्तिज्ञान इत्यनेन ग्रन्थेन, सूचिता= व्याप्तिनिरूपणेऽस्तीति प्रकटितमिति भावः ।

अस्यायमाशयः। अनुमानं प्रमाणं न वेति विशङ्क्य "अनुमानं प्रमाणं प्रमितिकरणतावच्छेदक धर्मवत्त्वात् प्रत्यक्षवत्" इत्यादि ग्रन्थेन प्रामाण्यविधेयकानुमानपक्षका-नुमितिः साधिता । तथा च व्याप्ति प्रकारकपक्षधर्मताज्ञानजन्यज्ञानत्वं अनुमितेर्लक्षणम् इत्युक्त्वा, "अनुमितिः स्वेतरभिन्ना व्याप्तिप्रकारकपक्षधर्मताज्ञानजन्यज्ञानत्वात्"इत्यादिना अनुमितिपक्षक अनुमितीतरभेदविधेयकानुमितिरपि व्यवस्थापिता । तथाच अत्रानुमितिपदेन अनुमितिपक्षका-नुमितीतरभेदसाध्यकानुमितेर्ग्रहणे बाधकाभावात् तद्धेतुभूतानुमितिलक्षणोपपादकत्वरूपा उपोद्घातनाम्नी सङ्गतिरेव व्याप्तिनिरूपणे अस्तीति । केचित्तुकल्पे अनुमितिहेतौ व्याप्तिज्ञानमिति

तत्पुरुषसमासाश्रयणात् लक्षणाप्रसक्त्या गौरवं पूर्वकल्पे कर्मधारयाश्रयणात् लक्षणाप्रसक्तिर्नास्तीति, आहुः इत्यनेन अस्वरसः सूचितः।

## चिन्तामणिः

न तावदव्यभिचरितत्वम्। तद्धि न साध्याभाववदवृत्तित्वम्।

### चिन्तामणिभास्करी

ननु अनुमितिहेतु इत्यादिना दर्शितां जिज्ञासां निवर्तयितुं यतमानानां केषाञ्चन मतमुपन्यस्य निराकरोति ''नतावदित्यादिना''।

### माथुरी

''न तावदिति'' तावदिति वाक्यालङ्कारे । अव्यभिचरितत्वम् = अव्यभिचरितत्वशब्दप्रतिपाद्यम्, तत्र हेतुमाह तद्धीत्यादि । हि=यस्मात्, तत् अव्यभिचरितत्वशब्दप्रतिपाद्यम् नेति सर्वस्मिन्नेव लक्षणे सम्बध्यते, तथा च व्याप्तिर्यतः साध्याभाववदवृत्तित्वादिरूपाव्यभिचरितत्वशब्दप्रतिपाद्यस्वरूपा न, अतः अव्यभिचरितत्वशब्दप्रतिपाद्यस्वरूपा नेत्यर्थः पर्यवसितः। विशेषा-भावकूटस्य सामान्याभावहेतुता प्रसिद्धैवेति न नञ्द्वयोपादानम् निरर्थकम्।

### मायुरीभास्करी

न तावदित्यादिचिन्तामणिं व्याख्याति, न तावदितीत्यादिना । न तवादिति=न तावदित्यादिचिन्तामणिघटकम् , तावत्=तावत्पदम् वाक्यालङ्कारे = वाक्यालङ्कारसम्पादनाय मूलस्थाव्यभिचरितत्वपदस्य अव्यभिचरितात्मकशब्द समुदायार्थकत्वभ्रमनिरासाय, तदर्थं दर्शयत्यव्यभिचरितत्वेत्यादिना, तथा च न सिद्धसाधनदोषः इतिभावः। तत्र=व्याप्तेः अव्यभिचरितत्वशब्दप्रतिपाद्यत्वस्वरूपानभ्युपगमे, नेति = न तावदित्यादि वाक्यघटक न शब्दार्थः, सर्वस्मिन्नेव लक्षणे = साध्याभाववदवृत्तित्वमित्यादिषु पञ्चस्वपि लक्षणेषु, सम्बध्यते= अन्वेति, एवञ्च कः पर्यवसितार्थ इत्यत आह तथाचेत्यादिना, तथा च=न शब्दार्थस्य पञ्चस्वपि लक्षणेषु समन्वयस्वीकारे, यतः = केवलान्वयिनि अभावात् प्रसक्ताव्याप्तिदोषतः , साध्यभावेत्यादि, साध्याभाववदवृत्तित्वरूपम् = साध्याभाववदवृत्तित्व, साध्यवद्भिन्नसाध्या-भाववदवृत्तित्व, साध्यवत्प्रतियोगिकान्योन्याभावासामानाधिकरण्य, सकलसाध्याभाववन्निष्ठा-भावप्रतियोगित्व, साध्यवदन्यावृत्तित्वादिरूपं यदव्यभिचरितत्वशब्दप्रतिपाद्यं तत्स्वरूपा न, अतः =

उक्ताव्याप्तिदोषात् । अव्यभिचरितत्वेति = अव्यभिचरितत्वशब्दप्रतिपाद्यत्वावच्छिन्न प्रतियोगिताक भेदवती । नन्वेवं सति साध्यसाधनयोरैक्यात् सिद्धिसाधनदोषः कथं वारणीय इत्यत आह विशेषाभावेत्यादि । तद्विशेषाभावसमुदायस्य हेतुत्वात् तत् सामान्याभावस्य च साध्यत्वाच्च न साध्यसाधनायोरैक्यं न वा सिद्धसाधनदोषश्चेति भावः। अतः=एकस्य नञर्थस्य साध्ये, अपरस्य नञर्थस्य साधने अन्वयमङ्गीकृत्य सामान्याभावविशेषाभाव -बोधकत्वाभ्युपगमात् । नञ्द्वयोपादानम्=न तावदित्यादिताक्ये नञद्वयप्रवेशः, न निरर्थकम् = न पुनरुक्त्यादिदोषाधायकम् ।

अस्यायमाशयः। व्याप्तौ अव्यभिचरितत्वशब्दप्रतिपाद्यभेदः साधनीयो ग्रन्थकृता । तथा च व्याप्तिः अव्यभिचरितत्वशब्दप्रतिपाद्या नेति सकृत्कथनेनैव तत्सिद्धौ वारद्वयं तस्य कथनं पुनरुक्तिदोषादिप्रसञ्जकं स्यादिति शङ्का निरसनीया, अतः एकस्य नञः अव्यभिचरितत्वशब्द-प्रतिपाद्यत्वावच्छिन्नप्रतियोगिताकस्वरूपसामान्यभेदोऽर्थः,द्वितीयस्य अव्यभिचरितत्वशब्द-प्रतिपाद्य साध्याभाववदवृत्तित्वादिनिष्ठतत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदसमुदायोऽर्थः, तथा च न पुनरुक्त्यादिदोषः । विशेषाभावकूटस्य हेतुत्वात् । सामान्याभावस्यसाध्यत्वाच्च । विशेषभावकूटस्य सामान्याभावसाधकत्वमस्ति न वा इत्यपि न शङ्कनीयम्, एकस्या अपि घटादिव्यक्ते भूतले सत्त्वदशायां घटोनास्तीत्यादि सामान्याभावप्रतीतेः अदर्शनात् सर्वासां नीलपीतादिघटादिव्यक्तीनाम् अभावदशायामेव घटोनास्तीति सामान्याभावप्रतीतेः दर्शनाच्च, तथा च उक्तव्याख्याने न कोऽपि दोषः इति । नन्वेतावता व्याप्तेः पक्षत्वं साधितमेवञ्च केवलान्वयिनि आभावादिति ग्रन्थो असङ्गतः । केवलान्वयिनि सर्वैरपि नैयायिकैः व्याप्तेरभ्युपगमात् तदभावस्य अनभ्युपगमाच्च इति चेन्न, प्रथमं केवलान्वयिन्यभावादिति हेतुना अव्यभिचरितत्वशब्दप्रतिपाद्ये व्याप्ति भेदः साधनीयः पश्चात् तद्विशेषाभावकूटहेतुना तत्सामान्याभावस्य व्याप्तौ साधनीयत्वात्, तथाच केवालान्वयिन्यभावदिति हेतोर्व्याप्तावसत्त्वेऽपि ग्रन्थाऽसङ्गतेरभावात् ।

**माथुरी**

''साध्याभाववदवृत्तित्वमिति''। वृत्तम् = वृत्तिः । भावेनिष्ठाप्रत्ययात्। वृत्त्स्याभावोऽवृत्तम्, वृत्त्यभाव इति यावत् । साध्याभाववतोऽवृत्तम् साध्याभाववदवृत्तम्, साध्याभाववद्वृत्त्यभाव इति यावत्। तद्यत्रास्ति स साध्याभाववदवृत्ती, मत्वर्थयिन्प्रत्ययात् तस्य भावः साध्याभाववदवृत्तित्वम् । तथाच साध्याभाववद्वृत्त्यभाववत्त्वमिति फलितमिति प्राञ्चः ।

**माथुरीभास्करी**

उत्तरपक्षवत्पूर्वपक्षोऽपि परिष्करणीय इति न्यायात् साध्याभाववदवृत्तित्वपदार्थं विशदीकर्तुकामः स्वमतदार्ढ्याय प्रथमं प्राचीनमतमाश्रित्य साध्याभाववदवृत्तित्वपदार्थं दर्शयति साध्याभावेत्यादिना । वृत्तम् = साध्याभावेत्यादिलक्षणघटकवृत्तपदार्थः, वृत्तिः= आधेयत्वम्, वृत्तपदात् कथं वृत्त्यर्थलाभ इत्यत आह भावे निष्ठेति, भावे=धात्वर्थे, निष्ठाप्रत्ययात्=क्तक्तवत् स्वरूपो यो निष्ठाप्रत्ययः तदेकदेशक्तप्रत्ययात्, वृत्तधातोर्धात्वर्थे क्तप्रत्यये वृत्तमितिरूपं निष्पन्नमिति परमार्थः। वृत्तस्य=आधेयत्वस्य, साध्याभाववद्वृत्त्यभावः= साध्याभाववन्निरूपिताधेयत्वाभावः , तद् = साध्याभाववदवृत्तम् , मत्वर्थीयेनुप्रत्ययात्= ततो मत्वर्थीयेनुप्रत्यये कृते साध्याभाववदवृत्तीति फलितमिति भावः, तस्य भावः = साध्याभावव-दवृत्तिनः भावः, तथा च = साध्याभाववदवृत्तपदान्मत्वर्थीयेनुप्रत्ययानन्तरं ततो भावार्थक-त्वप्रत्यये, साध्याभावेति । साध्याभाववन्निरूपितवृत्त्यभावः = साध्याभाववन्निरूपिताधेयत्वाभाव इति यावत् । मतुप्प्रत्ययान्तपदात् विहितत्वप्रत्ययान्तपदस्य मतुप्प्रत्ययप्रकृत्यर्थवाचकत्वनियमात् । यथा गन्धवत्त्वञ्च गन्ध एव तथा साध्याभाववदवृत्तित्वञ्च साध्याभाववद्वृत्यभाव एव इति भावः। प्राञ्चः=प्राञ्चो ब्रुवन्तीति भावः ।

**माथुरी**

तदसत् । ''न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत् तदर्थप्रतिपत्तिकरः'' इत्यनुशासन विरोधात् । तत्र कर्मधारयपदस्य बहुव्रीहीतरसमासपरत्वात् । तच्च अगुणवत्त्वमिति साधर्म्यव्याख्यानावसरे गुणप्रकाशरहस्ये तद्दीधितिरहस्ये च स्फुटम्। अव्ययीभावसमासोत्तरपदार्थेन समं तत्समासानिविष्ठपदार्थान्तरा-न्वयस्य अव्युत्पन्नत्वात्। यथा भूतल उपकुम्भं, भूतलेऽघट इत्यादौ भूतल-वृत्तिघटसमीप तदत्यन्ताभावयोरप्रतीतेः । एतेन वृत्तेरभावोऽवृत्तीति अव्ययीभावानन्तरं साध्याभाववतोऽवृत्तिर्यत्रेति बहुव्रीहिरित्यपि प्रत्युक्तम् । वृत्तौ साध्याभाववतोऽनन्वयापत्तेः । अव्ययीभावसमासस्याव्ययतया तेन समं समासान्तराऽसम्भावाच्च, नाञुपाध्यादिरूपाव्ययविशेषाणामेव समस्यमानत्वेन परिगणितत्वात् ।

**माथुरीभास्करी**

साध्याभाववदवृत्तित्वमित्यस्य प्राचीनमतमाश्रित्य दर्शितव्याख्यानं दूषयति तदसदित्यादिना । तत्= साध्याभाववदवत्तित्वमित्यस्य पूर्वोक्तं व्याख्यानम्, असत्=न साधु, तस्य असाधुत्वे हेतुमाह, न कर्मधारयादिति । बहुव्रीहिः=बहुव्रीहिसमासः, तदर्थेति, तदर्थस्य = मत्वर्थीयप्रत्ययार्थस्य, प्रतिपत्तिकरश्चेत् = बोधजनको भवेद्यदि, कर्मधारयात् = कर्मधारय-समासात्, न मत्वर्थीयः =

मत्वर्थकप्रत्ययो न भवति, इत्यानुशासनविरोधात् = इत्येतन्नियम-विरोधात् । ननु प्रकृते तत्पुरुषसमासादेव इनुप्रत्ययः कृतो न तु कर्मधारयसमासात्, तथा च कथमुक्तानुशासनविरोध इत्यत आह तत्रेति । तत्र = नकर्मधारयादित्यादिनियमे घटकस्य, कर्मधारयपदस्य = कर्मधारयसमासपदस्य, बहुव्रीहीतरसमासपरत्वम्= बहुव्रीहिसमासभिन्नसमास-बोधपरत्वम् । ननु प्राचीनव्याख्याने दोषदानार्थं न कर्मधारयादित्यादिनियमघटककर्मधारयपदस्य लक्षणया बहुव्रीहिभिन्न समासपरत्वकथनं नोचितमित्यत आह तच्चेति । तच्च=न कर्मधारयादित्या-द्यनुशासनघटक कर्मधारयपदस्य बहुव्रीहिसमासेतरसमासपरत्ववर्णनञ्च, अगुणवत्त्वमित्यादि, अगुणवत्त्वमिति = अगुणंवत्त्वरूपं यत्साधर्म्यं तस्य, व्याख्यानावसरे = अर्थस्फुटीकरणसमये, अगुणवत्त्वपदस्यार्थविवेचनसमय इति फलितार्थः, गुणप्रकाशरहस्ये = वर्धमानोपाध्याय-विरचिते प्रकाशनामकव्याख्यानग्रन्थे, तद्दीधितिरहस्ये च = गुणप्रकाशटीकायाः दीधिति-रहस्यनाम्नी या टीका रघुनाथेन कृता, तस्यां टीकायामपि, स्पष्टम् = स्पष्टीकृतम् ।

अस्यायमाशयः । न कर्मधारयादित्यादिनियमघटककर्मधारयपदस्य दर्शितप्राचीनमत-व्याख्यानखण्डनार्थं बहुव्रीहिसमासभिन्नसमासार्थकत्वं मयैव न स्वीक्रियते । किन्तु द्रव्य-भिन्नानाम् अगुणवत्त्वम् साधर्म्यमिति प्रामाणिकैः यदुक्तं, तस्य संस्थापनायैव वर्धमान-रघुनाथशिरोमणिप्रभृतिभिः तत्र कर्मधारयपदस्य तादृशार्थः कृतः। तथा च तत्र प्राचीनव्याख्यानं नोचितमेवेति । ननु गुणप्रकाशादौ किमुक्तं येनैवं कल्प्येतेति चेत्, श्रूयताम् । गुणस्याभावोऽगुणं, तद् यत्रास्ति सोऽगुणवान्, तस्यभावोऽगुणवत्त्वम् । गुणोऽस्यामस्तीति गुणवान्, न गुणवान् अगुणवान्, तस्य भावोऽगुणवत्त्वमिति, द्विधा तस्यार्थः सम्भवति। तथाच तत्र प्रथमव्याख्याने गुणाभाववत्त्वं साधर्म्यमिति पर्यवस्यति । एवञ्च तस्य जन्यद्रव्येऽपि उत्पत्तिकालावच्छेदेन सत्त्वादतिव्याप्तिः प्रसज्यतेऽतः सा वारणीया । तद्वारणञ्चोक्तानुशासने कर्मधारयपदस्य बहुव्रीहीतरसमासार्थकत्वं यदि स्वीक्रियेत, तदैव भवति नान्यथा । अतः तत्र कर्मधारयपदस्य तादृशार्थकत्वमङ्गीकृतम् । तथा च प्रथमव्याख्यानस्य निरस्तत्वात् द्वितीयव्याख्यानमेव स्वीकार्यम् । एवञ्च गुणिभेदवत्त्वमेव तदर्थः फलिष्यति। तथा च तस्य जन्यद्रव्येऽसत्वा-न्नातिव्याप्तिरिति सर्वं समञ्जसम् ।

ननु न कर्मधारयादित्यनुशासनं वैकल्पिकमित्येव स्वीकार्यम् । अन्यथाऽसुब्वतो धातोरिति पातञ्जलमहाभाष्येण विरोधः स्यात् । तेन तत्र नञ्तत्पुरुषानन्तरं मतुप् प्रत्ययस्वीकारात् । किञ्च कर्मधारयानन्तरं मतुप्प्रत्ययविधानात् रक्तदण्डवान् परुष इति प्रामाणिकप्रयोगोपि बाध्येत । अतस्तदनुशासनं काचित्कमिति निर्विवादमेव । तथाच प्राचीन व्याख्यानमपि निर्दुष्टमेवेति तदसदित्याना तद्दूषणं नोचितमित्यत आह । अव्यव्यीभावेत्यादि । अव्ययीभावेति= अव्ययीभावसमासस्य, उत्तरपदं=परवर्ति यत्पदं, तस्य यो अर्थस्तेन, तत्समासानिविष्टेति, तत्समासः

= अव्ययीभावसमासः, तस्मिन्, अनिविष्टम्= अघटकम्, अवर्तमानमिति यावत्, तस्य, यत्पदार्थान्तरम् = अव्ययीभावसमासघटकपदार्थभिन्नात्मकम्, तस्य योऽन्वयस्तस्य, अव्युत्पन्नत्वात्= प्रामाणिकैरनङ्गीकारात्। अव्ययीभावेत्यादिनोक्तार्थे दृष्टान्ते दर्शयति यथेत्यादिना। भूतल इत्यादि = भूतले उपकुम्भमित्यत्रोपकुम्भरूपो योऽव्ययीभावसमास-स्तत्परवर्ति यत्कुम्भपदं तदर्थेन घटेन तत्समासाघटकस्य भूतल इति सप्तम्यन्तपदस्य यो भूतलवृत्तित्वरूपोऽर्थस्तस्यान्वयो अव्युत्पन्न इति भूतले उपकुम्भमिति वाक्यात् भूतल वृत्तिघटसमीपार्थो न प्रतीयते । तथा भूतलेऽघटमित्यत्रापि, अघटमित्यव्ययीभावसमास-घटकोत्तरघटपदार्थेन समं तदघटकभूतलेतिसप्तम्यन्तपदार्थात्मक भूतलवृत्तित्वपदार्थस्याप्यन्वयो नोचितइति भावः।

अस्यायमाशयः । साध्याभाववदवृत्तित्वमित्यादेः प्राचीनकृत व्याख्यानं न कर्मधारयादित्य-नुशासनविरूध्दं मा भवतु, तथापि अव्ययीभावसमासघटकोत्तरपदार्थेन तत्समासानिविष्टपदार्थान्तारा-न्वयमभ्युपेत्यैव कृतमतोनिराक्रियते तद्व्याख्यानं प्रामाणिकमतविरुध्दत्वात् । तथाहि वृत्तस्याभावो-ऽवृत्तमिति यः अव्ययीभावसमासः तदुत्तरवृत्तपदार्थेन वृत्त्यात्मकेन समंपश्च्यन्त साध्याभाववत्पदार्थभूतस्य साध्याभाववन्निरूपितत्वस्यान्वयोऽभ्युपगतोऽतः तद् व्याख्यानं नोचितमिति तदसदित्यादिना तन्निराकरणं सङ्गतमेवेति।

न कर्मधारयादित्यनुशासनविरोधो यथा न स्यात्तथा साध्याभाववदित्यस्य यद् व्याख्यान-मन्यैः कृतं तदपि प्रदर्श्य दूषयति एतेनेत्यादिना । एतेनेत्यस्याग्रेतनेन प्रत्युक्तमित्यनेनान्वयः। एतेन=अव्ययीभावसमासोत्तरपदार्थेत्यादिदत्तदोषेण, वृत्तेः=आधेयत्वस्य,अवृत्तीत्यव्ययीभावा-नन्तरम् = अवृत्तिस्वरूपो यो अव्ययीभावसमासः तदनन्तरम्, अवृत्तिः =आधेयत्वाभावः, । वृत्तित्वाधेयत्ववृत्तिशब्दाः समानार्थकाः, प्रत्युक्तम् = निराकृतम् , तस्य व्याख्यानस्य निरस्तत्वे हेतुमाह वृत्तावित्यादिना । वृत्तौ = आधेयत्वे, साध्याभाववतः = साध्याभावविशिष्टस्य, साध्याभावाधिकरणस्येति यावत्, अनन्वयापत्तेः = निरूपितत्वसम्वन्धेनान्वयासम्भवात्।

अस्यायमाशयः। एतेषां मते अवृत्तीत्यत्र मत्वर्थीयप्रत्ययमविधाय वृत्तिपदेन सहैव समासः कृतः । तथा च न कर्मधारयादित्यनुशासनविरोधो यद्यपि नास्ति, तथापि अव्ययीभाव समासोत्तरपदार्थेन समं तत्समासानिविष्टपदार्थान्तरस्यान्वयो न सम्भवतीत्यनुशासन-विरोधोऽस्त्येव । तथाहि । वृत्तेरभावोऽवृत्तीत्यव्ययीभावसमासं विधाय ततः-साध्याभाववतोऽवृत्तिर्यत्रेत्यव्ययीभावघटितबहुव्रीहिसमासः स्वीकृतः, तथा अवृत्तीत्य-व्ययीभावसमासघटकवृत्तिपदार्थेनाधेयत्वेन समं साध्याभाववत्पदार्थस्यान्वयः स्वीकृतः, अन्यथा तल्लक्षणात्साध्याभाववन्निरूपितवृत्तित्वाभावस्य प्रतीत्यसंभवापत्तेः । तथाच तादृशानुशासन-विरोधोऽस्त्येवेति व्याख्यानमिदमपि न समीचीनमिति। भूतले उपकुम्भमित्यादि स्थलेऽव्ययीभाव-समास

घटक सप्तम्यन्त भूतलपदार्थस्य भूतलवृत्तित्वस्योपकुम्भमित्यव्ययीभावसमासघटकोत्तर पदार्थेन कुम्भेनान्वयस्याभ्युपगमात् प्रकृतेपि तथास्वीकारे नास्ति पूर्वोक्त व्याख्यानद्वयेपि दोषलेश इत्यत: प्रकारान्तरेण दूषयति तद्व्याख्यान द्वयमपि अव्ययीभावेत्यादिना । अव्ययतया= अव्ययीभावश्चेति पाणिनिसूत्रेणाव्ययीभावसमासस्याव्ययत्वविधानादिति भाव:। तेन = अव्ययीभावसमासेन समम्, समासान्तरेत्यादि = अव्ययीभावसमासभिन्न- समासस्यासम्भवादितिभाव: ।

अस्यायमाशय: । दर्शितव्याख्यानद्वये मतान्तरमाश्रित्य पूर्वोक्तदोषद्वयस्यापि कथञ्चिद्वारणेपिप्रकृतदोषस्य वारणं न भवति । तथाहि । प्रथमव्याख्याने वृत्तस्या भावोऽवृत्तमित्यव्ययीभावसमासं विधाय तेन सह साध्याभावत्पदस्यसमास: स्वीकृत:। साध्याभाववतोऽवृत्तमिति षष्ठीतत्पुरूषाश्रयणात् द्वितीयाव्याख्यानेपि वृत्तेरभावोऽवृत्तीत्य-व्ययीभावानन्तरं साध्याभाववतोऽवृत्ति यंत्रेत्याकरक: अवृत्तीत्यव्ययेनसह साध्याभाववत्पदस्य बहुव्रीहिसमास: स्वीकृतस्तथाचोभयत्रापि अव्ययेन सहैव समासान्तरस्वीकारात्तद्व्यख्यान- द्वयमपि नोचितम् इति ।

ननु अनल्पं निर्मक्षिकं सुपुरूष: सुधर्म निष्कौशाम्बिरित्यादौ सुप्रभृत्यव्ययै: सहसमासान्तरस्य प्रामाणिकै: स्वीकारात् प्रकृतेपि अवृत्तमित्याद्यव्ययै: सह तत्परुषसमासाभ्युपगमे दोषो नास्तीति तद्व्याख्यान द्वयमपि समीचीनमेवेति तन्निराकरणं नोचितमित्यत आह "नञुपाध्येत्यादि" । नञ्च, उप च, अधिचेति द्वन्द्व:, ततो नञुपाधय: आदिर्येषामिति बहुव्रीहि: । नञुपाधिरूपा येऽव्ययविशेषा: तेषामेव, समस्यमानत्वेन = समासार्हत्वेन परिगणितत्वात् = प्रतिपादितत्वात्।

अस्ययमाशय: । व्याकरणशास्त्रे येषां अव्ययानां पदान्तरै: सह समासोविहितस्तेषां मध्येऽवृत्तमवृत्तीत्याद्यव्ययानामनन्तर्गतत्वात् अवृत्तावृत्तिद्वयस्यापि पदान्तरेण समासो नोचित इति दर्शितव्याख्याद्वयं असङ्गतमेवेति ।

**माथुरी**

वस्तुतस्तु साध्याभाववतो न वृत्तिर्यत्रेति त्रिपद व्यधिकरणबहुव्रीह्युत्तरं त्वप्रत्यय:। साध्याभाववत इत्यत्र निरूपितत्वं षष्ठ्यर्थ:, अन्वयश्चास्यवृत्तौ । तथाच साध्याभावाधिकरणनिरुपितवृत्यभाववत्त्वं अव्यभिचरितत्वम् इति फलितम् । न च व्यधिकरणबहुव्रीहि: सर्वत्र न साधुरिति वाच्यम् । अयं हेतु: साध्याभाववदवृत्तिरित्यादौ व्यधिकरणबहुव्रीहिं विना गत्यन्तराभावेना-त्रापिव्यधिकरणबहुव्रीहे: साधुत्वात् ।

### माथुरीभास्करी

साध्याभाववदवृत्तित्वमित्यस्य प्राचीनव्याख्यानं निरस्य, स्वाभिमतं व्याख्यानं दर्शयति । वस्तुतस्तु इत्यादिना । वस्तुतस्तु = निर्दुष्टव्याख्यानन्तु, साध्याभाववत:= साध्याभावा-धिकरणस्य, वृत्तिः = आधेयत्वम् ,(वृत्तित्वाधेयत्वशब्दानां समानार्थकत्वात्) यत्रेति = यत्रेत्याकारकः यत्रेतिविग्रह सहितो यो व्यधिकरण बहुव्रीहिः तदुत्तरम् , त्वप्रत्ययः = तादृश समासात्परं भावार्थे त्व प्रत्ययः कृत इति भावः। निरूपितत्वं षष्ठ्यर्थः = विग्रहवाक्यघटक-षष्ठीविभक्त्यर्थः, अस्य = षष्ठ्यर्थस्य, वृत्तौ = आधेयत्वे, एवं च पर्यवसितार्थः क इत्यत आह तथाचेति, तथाच = साध्याभाववदवृत्तित्वपदस्य दर्शितरीत्या व्याख्यानेस्वीकृते, साध्याभावेति= अत्रापि तादृशाभाववत्त्वपदेन तादृश अभाव एव ग्राह्यः। मतुप्प्रत्ययान्तविहित त्वतलप्रत्यययोः मतुप्प्रकृतिबोधकत्वनियमात् । ननु यथा दर्शितव्यानद्वयेऽनुशासनविरोधादिरूपदोषो वर्तते, तथा वस्तुतस्तु कल्पेऽपि व्यधिकरणबहुव्रीहिसमासकल्पनात्मकदोषोऽस्त्येवेति अयमपि कल्पो न निर्दुष्टइत्याशङ्कते न चेत्यादिना । व्यधिकरणबहुव्रीहिः = विभिन्नविभक्तिकपदघटित बहुव्रीहिः, सर्वत्र = जन्माद्युत्तरपदसमासातिरिक्तस्थले, न साधुः = न शाब्दप्रमाजनकः।

अस्यायमाशयः । अवर्ज्योजन्माद्युत्तरपदव्यधिकरणबहुव्रीहिः इति वामनवचनात् जन्माद्युत्तरपद व्यधिकरणबहुव्रीहेस्साधुत्वेपि प्रकृत साध्यभाववदवृत्तित्वमित्यत्र व्यधिकरण बहुव्रीहिः न साधुरिति । न चेत्यादिना कृतामाशङ्कां निरसितुं यक्तिंदर्शयत्यंय हेतुरित्यादिना । अयं हेतुरित्यादि = अयं हेतुः साध्याभाववदवृत्तिरितियत्प्रामाणिकैरुक्तं तत्र, गत्यन्तराभावेन = विनाबहुव्रीहिसमासं अन्येनसमासेन विवक्षितार्थ लाभासंभवेन, अत्रापि = साध्याभाववद-वृत्तित्वमव्यभिचरितत्वमित्यत्रापि, व्यधिकरणबहुव्रीहेः = विभिन्नविभक्तिकपदघटितबहुव्रीहेः, साधुत्वात् = शाब्दप्रमाजनकत्वात् ।

अस्यायमाशयः। अयं हेतुः साध्याभाववदवृत्तिरित्यत्र प्रामाणिकैर्व्यधिकरणबहुव्रीहेः स्वीकारात् पूर्वोक्तकल्पद्वये वस्तुतस्तुकल्पे च साध्याभाववदवृत्तिरित्यत्र बहुव्रीहिरभ्युपेय-एवान्यथा प्रामाणिकग्रन्थविरोधापत्तेः। तथाच दर्शित व्याख्यान द्वये उक्तानुशासनविरोधादिरूप एको दोषोऽयमप्येको दोषइति दोषद्वयं वस्तुतस्तु कल्पे तु अयमेक एव दोष इति वस्तुतस्तु कल्प एव श्रेयानिति। तथाचैतावता साध्याभावाधिकरणनिरूपितवृत्तित्वाभावो व्याप्तिरिति फलितम् । एवं च वह्निमान् धूमात् इत्यादौ साध्यो वह्निः, साध्याभावो वह्न्यभावः, तदधिकरणं जल-ह्रदादिकं, तन्निरूपितवृत्तित्वं मीनशैवालादौ तदभावो धूमेऽस्तीति लक्षणसमन्वयो बोध्यः ।

**माथुरी**

साध्याभावाधिकरणवृत्त्यभावश्च तादृश वृत्तित्वसामान्याभावो बोध्यः। तेन धूमवान् वह्नेरित्यादौ धूमाभाववज्जलह्रदादिवृत्तित्वाभावस्य धूमाभाववद्वृत्तित्व-जलत्वोभयत्वावच्छिन्नाभावस्य च वह्नौ सत्त्वेऽपि नातिव्याप्तिः ।

**माथुरीभास्करी**

ननु घटाभाव इत्यादि शब्दप्रयोगात् घटादि प्रागभावप्रध्वंसाभावात्यन्ताभावान्योन्याभावानां यथा प्रतीतिर्जायतेऽन्यव्यावर्तक पदाभावात्, तथा घटादि विशेषाभावस्य घटादिसामान्याभावस्य घटपटाद्युभयाभावस्य च प्रतीतिर्जायत एव, अन्यव्यावर्तकाभावात् । घटाद्यभावपदस्य घटादिमात्रनिष्ठप्रतियोगिताकाभावत्वस्य घटादिविशेषसामान्योभयाभावेषु सत्त्वात् । तथा च साध्याभावाधिकरणवृत्तित्वाभाव इत्यत्रापि तादृशवृत्तित्वाभावपदेन तादृशवृत्तित्वमात्रनिष्ठ-प्रतियोगिताकानां सामान्यविशेषोभयाद्यभावानां प्रतीति जायत एवान्यतमनियामक व्यावर्तक-पदाभावात्, तथाच धूमवान् वह्नेः इत्यादि दुष्टहेतौ व्यभिचारः प्रसज्यते। तथाहि । साध्यो धूमः, साध्याभावो धूमाभावः, तदधिकरणं जलह्रदादिकमपि, तन्निरूपितवृत्तित्वं मीनशैवालादौ तदभावो वह्नौ वर्तते, तथा साध्यो धूमः, साध्याभावो धूमाभावः, तदधिकरणमयोगोलकं, तद्वृत्तित्वजलत्वोभयाभावो वह्नावस्तीति अतिव्याप्तिः स्यादित्याशङ्कायामाह साध्याभावेत्यादि ।

साध्याभावेत्यादि । साध्याभावाधिकरणनिरूपिताधेयत्वाभावश्च, तादृशेति = साध्या-भावाधिकरणनिरूपिताधेयत्वसामान्याभावः, किमेतेन फलितमित्यत आह तेनेति । तेन = विशेषोभयाभावादि व्यावृत्तये तादृशवृत्तित्वाभावपदेन तादृशवृत्तित्वसामान्याभावस्य विवक्षणेन, धूमवान् वह्नेरित्यादौ = धूमवान् वह्नेः इत्यादि दुष्टहेतु स्थले, धूमाभावेत्यादि = साध्याभावात्मक धूमाभाववान् यो जलह्रदादिस्ततन्निरूपिताधेयत्वाभावस्य, धूमाभाववद्वृत्तित्वेति= धूमाभावव-न्निरूपित वृत्तित्वं च जलत्वं चेति द्वन्द्वः तादृश वृत्तित्वत्व जलत्व रूपं यदुभयं तत्त्वावच्छिन्न प्रतियोगिताकाभावस्य च, वह्नौ= वह्निरूप हेतौ, सत्त्वेऽपि, नातिव्याप्तिः = अतिव्याप्तिः न भवतीति भावः । एतेनेत्यस्यनातिव्याप्तिरित्यनेनान्वयः ।

अस्यायमाशयः। तत्र वृत्तित्वसामान्याभाव निवेशे धूमवान् वह्नेरित्यादौ धूमाभावाधिकरण-निरूपित वृत्तितात्वेतरधर्मानवच्छिन्नतादृशवृत्तितात्वावच्छिन्नप्रतियोगिताकाभाव एव पर्यवस्यति। तथा च धूमाभाववज्जलह्रदादिनिरूपितवृत्तित्वाभावश्च न तादृशवृत्तित्वसामान्याभावः। तस्य धूमाभावाधिकरणनिरूपितवृत्तितात्वेतर धूमाभाववज्जलह्रदादिनिरूपितवृत्तितात्वावच्छिन्न-प्रतियोगिताकत्वात् । तथा धूमाभाववद्वृत्तित्व जलोभयाभावोपि न तादृश वृत्तित्वसामान्या भावः

तस्यापि धूमाभावाधिकरणनिरूपितवृत्तितात्वेतर धूमाभाववद्वृत्तित्वत्व जलत्वोभयत्वावच्छिन्नप्रतियोगिताकत्वात् । तथा च तत्र वह्निरूपहेतौ धूमाभावाधिकरणायोगोलकनिरूपित - वृत्तित्वस्यसत्त्वेन तादृशवृत्तित्वसामान्याभावस्यासत्त्वान्नातिव्याप्तिरिति ।

नन्वेतावता साध्याभावाधिकरणनिरूपितवृत्तित्वसामान्याभावोव्याप्तिरिति फलितम् । एवञ्च धूमवान् वह्नेरित्यादि दुष्टहेतावतिव्याप्ति वारणेपि वह्निमान् धूमादित्यादावव्याप्तिस्तथाहि । अत्र साध्यो वह्निः साध्याभावो वह्न्यभावः तदधिकरणे धूमावयवे धूमस्य समवायेन सत्त्वेन तन्निरूपितवृत्तित्वाभावस्य धूमेऽसत्त्वात् । किञ्चात्र साध्याभावपदस्य साध्यनिष्ठप्रतियोगिताकाभावोऽर्थः, तथाच पूर्वोक्तरीत्या प्रकृते साध्याभावपदेन वह्निनिष्ठप्रतियोगिताकः तत्तद्व्यक्तित्वावच्छिन्नाभावः, वह्निजलोभयाभावश्च ग्रहीतुं शक्यते। तथाच पर्वतादावपि वह्निनिष्ठ प्रतियोगिताकस्य तत्तद्व्यक्त्यभावस्य वह्निजलोभयाभावस्यच सत्त्वात् तस्य साध्याभावाधिकरण पदेन धर्तुं शक्यत्वात् तत्र धूमरूपहेतोस्सत्त्वाच्च अव्याप्तिः । किञ्च वह्निनिष्ठप्रतियोगिताकाभाव-पदेन समवायेन वह्निर्नास्तीति अभावस्यापि ग्रहणात् तदधिकरणे पर्वतादौ धूमरूपहेतोस्सत्त्वाच्च अव्याप्तिरित्यत आह साध्याभाववद्वृत्तिश्चेत्यादि ।

**माथुरी**

**साध्याभाववद्वृत्तिश्च हेतुतावच्छेदकसम्बन्धेन विवक्षणीया । तेन वह्न्यभाववति धूमावयवे जलह्रदादौ च समवायेन कालिकविशेषणतादिना च धूमस्य वृत्तावपि नक्षतिः। साध्याभावश्च साध्यतावच्छेदकसंबन्धावच्छिन्न साध्यतावच्छेदका-वच्छिन्न प्रतियोगिताकः बोध्यः। तेन वह्निमान् धूमादित्यादौ समवायादिसम्बन्धेन वह्निसामान्यभावति संयोगसम्बन्धेन, तत्तद्वह्नित्व वह्निजलोभयत्वाद्यवच्छिन्ना-भाववति च पर्वतादौ संयोगेन धूमस्य वृत्तावपि न क्षतिः ।**

**माथुरीभास्करी**

साध्याभाववद्वृत्तिश्च = साध्याभावाधिकरणनिरूपिताधेयताच, हेतुतावच्छेदक-सम्बन्धेन = हेतुतावच्छेदकसम्बन्धावच्छिन्ना, विवक्षणीया = वाच्या, तादृश वृत्तौ हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशस्य फलमाहतेनेत्यादिना । तेन = साध्याभाववद्वृत्तित्वे हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशनेन, अस्य न क्षतिरित्यग्रिमग्रन्थेनान्वयः । वह्न्यभाववति = वह्न्यभावाधिकरणे, धूमावयवे = वह्न्यभावाधिकरणधूमावयवे, समवायेन- धूमस्य सत्त्वेपि नाव्याप्तिरिति भावः । जलह्रदेति । वह्न्यभावाधिकरणे जलह्रदादौ कालिकादिसम्बन्धेन धूमस्य सत्त्वेऽपि नाव्याप्तिरिति भावः । समवायेन = समवायसम्बन्धेन, कालिकेत्यादि = कालिकसंबन्धेन दैशिकसम्बन्धेन वा, धूमस्य= धूमात्मक हेतोः वृत्तावपि = सत्त्वेऽपि, न क्षतिः = नाव्याप्तिः ।

अस्यायमाशयः । साध्याभावाधिकरणनिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्व-
मान्याभावएव व्याप्तिलक्षणे निवेश्यते । तथा च वह्निमान् धूमादित्यादौ संयोगसम्बन्धस्यैव
तुतावच्छेदकसम्बन्धत्वात् वह्न्यभावाधिकरणनिरूपित हेतुतावच्छेदक संयोगसम्बन्धावच्छिन्न वृत्तित्वस्य
स्यापि धूमरूप हेतावसत्त्वेन तत्सामान्याभावस्याव्याहतत्वात् लक्षणसमन्वयः । वह्न्यभावाधिकरण
ावयवनिरूपित समवायसम्बन्धावच्छिन्नवृत्तित्वाभावस्य वह्न्यभावाधिकरण जलह्रदादिनिरूपित
ालिकसम्बन्धावच्छिन्नवृत्तित्वाभावस्य च लक्षणे अप्रवेशेन हेतावसत्त्वेऽपि नाव्याप्तिरिति ।

ननु एतावता साध्याभावाधिकरणनिरूपित हेतुतावच्छेदकसम्बन्धावच्छिन्न वृत्तित्व-
मान्याभावो व्याप्तिरिति फलितम् । तथापि साध्याभावपदेन वह्निमान् धूमादित्यादौ वह्निनिष्ठ-
तियोगिताकानां समवायावच्छिन्नवह्न्यभाव, तत्तद्वह्न्यभाव, वह्निजलोभयाभावानामपि
हणसम्भवात् तदधिकरणेपर्वतादौ हेतोस्सत्त्वेन पूर्वोक्ताव्याप्तिः तदवस्थैवेत्यत आह
ध्याभावश्चेत्यादि । साध्याभावश्च = लक्षणघटक साध्याभावपदार्थश्च, साध्यता वच्छेदकेत्यादि
साध्यतावच्छेदकसंबन्धावच्छिन्ना, साध्यतावच्छेदकधर्मावच्छिन्ना या प्रतियोगिता
निरूपकाभावः, बोध्यः = लक्षणघटकसाध्याभावपदेन ग्राह्यः। साध्याभावपदेन
ध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभावविवक्षणस्य
लमाह तेनेत्यादिना । तेन = साध्याभावपदेन साध्यतावच्छेदकसम्बन्धावच्छिन्न
ध्यतावच्छेदकधर्ममात्रावच्छिन्नप्रतियोगिताकाभावस्य ग्रहणेन, समवायादिसंबन्धेन =
वायतादात्म्यादिसम्बन्धेन, वह्निसामान्याभाववति =वह्नित्वमात्रावच्छिन्नप्रतियोगिताका-
वाधिकरणे, संयोगेन = साध्यतावच्छेदकसंयोगसम्बन्धेन , तत्तद्वह्नित्वेत्यादि = महानसीय
ह्नित्वादिरुप तत्तद्वह्नित्वावच्छिन्नभाववति, वह्निजलोभयत्वावच्छिन्न वह्निनिष्ठप्रतियोगिताका-
वति च, संयोगेन = हेतुतावच्छेदक संयोगसम्बन्धेन, धूमस्य = धूमात्मक हेतोः,
वपि = सत्त्वेपि, न क्षतिः = नाव्याप्तिः ।

अस्यायमाशयः। लक्षण घटकसाध्याभावपदेन साध्यसामान्याभावात्मकः
तावच्छेदकधर्मभिन्नधर्मानवच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभावो ग्राह्यः तथा
वह्निमान् धूमात् इत्यादि स्थले तत्तद्वह्न्यभावः वह्नित्वरूपसाध्यतावच्छेदक भिन्न-
व्यक्तित्वावच्छिन्नप्रतियोगिताकः, तथा महानसीयवह्न्यभावोऽपि वह्नित्वरूप साध्यतावच्छेदकभिन्न
सीयत्वावच्छिन्नप्रतियोगिताकः, तथा वह्निजलोभयाभावोऽपि वह्नित्वभिन्न जलत्वाद्यवच्छिन्न
ोगिताकः, अतः तेषामभावानां वह्निसामान्याभावपदेन ग्रहणासंभवात्तानादाय नाव्याप्तिः ।
साध्यसामान्याभावोऽपि साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताक एव ग्राह्यः तथा च
ायादिसम्बन्धावच्छिन्न वह्न्यभावस्य लक्षणाघटकत्वात् तमादायापि नाव्याप्तिरिति ।

नन्वेतावता साध्यतावच्छेदकसंवन्धावच्छिन्नसाध्यतावच्छेदकधर्ममात्रावच्छिन्नप्रतियोगिताक-साध्याभावाधिकरणनिरूपित हेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वसामान्याभावो व्याप्तिरिति फलितम् । तथापि गुणत्ववान् ज्ञानत्वात् ,सत्तावान् जातेरित्यादावव्याप्तिरित्याशङ्कते । ननु तथापीत्यादिना ।

**माथुरी**

ननु तथापि गुणत्ववान् ज्ञानत्वात्, सत्तावान् जातेः इत्यादौ विषयित्व, अव्याप्यत्वादिसम्बन्धेन तादृशसाध्याभाववति ज्ञानादौ ज्ञानत्व जात्यादेः वर्तमानत्वादव्याप्तिः ।

**माथुरीभास्करी**

नन्वितिशब्दः शङ्का वोधकः, तथापि = साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदक-धर्ममात्रावच्छिन्नप्रतियोगिताक साध्याभावाधिकरणनिरूपित हेतुतावच्छेदकसंवन्धावच्छिन्न वृत्तित्वाभावोव्याप्तिरिति कथनेऽपि, इत्यादौ = इत्येतादृश सद्धेतौ, विषयित्वेत्यादि = गुणत्ववान् ज्ञानत्वात् इत्यत्र विषयित्वसम्बन्धेन, सत्तावान् जातेः इत्यादौ स्वाभाववद्वृत्तित्वात्मका-व्यप्यत्वादि संवन्धेनेत्यर्थः, तादृशसाध्याभाववति = साध्यतावच्छेदकसम्बन्धावच्छिन्न साध्यतावच्छेदकधर्ममात्रावच्छिन्नप्रतियोगिताकसाध्याभावाधिकरणे, ज्ञानादौ= हेत्वधिकरणे ज्ञाने, जन्य द्रव्ये च, ज्ञानत्वेत्यादि = ज्ञानत्वस्य, जातेश्च, वर्तमानत्वात्=सत्त्वात् ।

अस्यायमाशयः । अत्र साध्याभावोवृत्तित्वाभावश्च परिष्कृतः। साध्याभावस्याधिकरणं केन संवन्धेन ग्राह्यमिति नोक्तम् । तथा च येनकेनापि सम्वन्धेन साध्याभावस्य अधिकरणं ग्रहीतुं शक्यते। एवं सति गुणत्ववान् ज्ञानत्वात् इत्यत्राव्याप्तिः। तथाहि । साध्यतावच्छेदक-सम्वन्धावच्छिन्नसाध्यतावच्छेदकधर्ममात्रावच्छिन्नप्रतियोगिताकाभावः समवायेनगुणत्वंनास्तीत्यभावः। अस्य विषयित्वसम्वन्धेनाधिकरणं ज्ञानमेव, तथा च साध्याभावाधिकरणे ज्ञाने ज्ञानत्वरूपहेतोः सत्त्वादव्याप्तिः । तथा सत्तावान् जातेरित्यत्रापि । तथाहि, तादृश साध्याभावः समवायेन सत्तानास्तीत्यभावः अस्य स्वभाववद्वृत्तित्व सम्वन्धेनाधिकरणं जन्यद्रव्यं गुणकर्मादिकं च तत्र-जात्यात्मकहेतोस्सत्त्वेनाव्याप्तिः स्यादिति । ननु स्वाभावावद्वृत्तित्वसम्वन्धेन सत्ताभावो जन्यद्रव्यादौ कथमस्तीति चेत् तत् श्रूयतां, यत्सम्वन्धो यत्र वर्तते तत्र तत्सम्वन्ध्यपि वर्तत इति प्रामाणिकानामुक्तिः । तथा च सत्ताभावस्य सम्बन्धोऽव्याप्यत्वम्, तच्च स्वाभाववद्वृत्तित्वं । अत्र स्वपदार्थः = सत्ताभावः, स्वस्याभावः= सत्ताभावस्याभावः सत्तारूपः, तद्वन्ति द्रव्यगुणकर्माणि तद्वृत्तित्वं जन्यद्रव्यगुणकर्मादौ

वर्ततेऽतः सत्ताभावोप्यऽस्ति । तथाचाव्याप्यत्वसम्बन्धेन सत्ताभावाधिकरण जन्यद्रव्यादौ जातिरूपहेतुरस्तीत्यव्याप्तिः स्यादेवेति भावः ।

ननु गुणत्ववानित्यादिनादर्शिताव्याप्तिंवारयतां समाधानमुपन्यस्यदूषयति, न च साध्याभावेत्यादिना ।

**माथुरी**

**न च साध्याभावाधिकरणत्वमभावीयविशेषणताविशेषसम्बन्धेन विवक्षितमिति-वाच्यम् । तथा सति घटत्वात्यन्ताभाववान्, घटान्योन्याभाववान् वा पटत्वादित्यादौ साध्याभावस्य घटत्वादेर्विशेषणताविशेषसम्बन्धेनाधिकरणस्य अप्रसिध्याऽव्याप्तेरिति चेन्न, अत्यन्ताभावान्योन्याभावयोरत्यन्ताभावस्य सप्तम-पदार्थस्वरूपत्वात् ।**

**माथुरीभास्करी**

नञर्थस्याग्रेतनेन वाच्यमिति पदार्थेनान्वयः । साध्याभावाधिकरणत्वम्= साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकसाध्यसामान्याभावस्याधिकरणत्वम्, अभावीयविशेषणताविशेषसम्बन्धेन = अभावप्रतियोगिकस्वरूपसम्बन्धेन, विवक्षितमिति= लक्षणेप्रविष्टमिति, न वाच्यम्= न वक्तव्यमिति भावः ।

अस्यायमाशयः। साध्याभाववदवृत्तित्वमित्यत्र साध्याभावस्याधिकारणत्वं येनकेनापि सम्बन्धेन न निवेशनीयं । किन्तु अभावप्रतियोगिकस्वरूपसम्बन्धनैव निवेशनीयम् । एवं च गुणत्ववान् ज्ञानत्वादित्यत्र साध्यतावच्छेदकविषयित्वसम्बन्धेन गुणत्वसामान्याभावस्य अभावीय स्वरूपसम्बन्धेनाधिकरणं ज्ञानातिरक्तिमेव ,न तु ज्ञानम् । तथा च साध्याभावाधिकरणे ज्ञानातिरिक्ते ज्ञानत्वरूपहेतोरसत्त्वान्नाव्याप्तिः । तथा सत्तावान् जातेरित्यात्रापि साध्यतावच्छेदक समवायसम्बन्धेन सत्तासामान्याभावस्य अभावीयस्वरूपसम्बन्धेनाधिकरणं सामान्यादिर्नतु द्रव्यगुणकर्माणि । तथा च साध्याभावाधिकरणसामान्यदौ जातेः हेतुतावच्छेदक समवाय-सम्बन्धेनासत्त्वान्नाव्याप्तिरिति ।

ननु साध्याभावेत्यादिनोक्तं समाधानं दूषयितुं युक्तिंदर्शयति, तथासतीत्यादिना । तथासति= अभावीयस्वरूपसम्बन्धेन साध्याभावाधिकरणत्वविवक्षणे, घटत्वात्यन्ताभाववान् = समवायसम्बन्धावच्छिन्नघटत्वत्वावच्छिन्नप्रतियोगिताकात्यन्ताभाववान्, घटान्योन्याभाववान् = तादात्मयसम्बन्धावच्छिन्न घटत्ववावच्छिन्न प्रतियोगिताकाभाववान्, इत्यादौ = इत्येतत्प्रभृति सद्धेतौ, साध्याभावस्य = साध्यतावच्छेदकीभूतस्वरूपसम्बन्धेन घटत्वात्यन्ताभावाभावस्य,

साध्यतावच्छेदकस्वरूपसम्बन्धेन घटान्योन्याभावाभावस्य, घटत्वादेः = घटत्वाद्यात्मक भावपदार्थस्य, अभावीयविशेषणताविशेषसम्बन्धेन = अभावप्रतियोगिकस्वरूपसम्बन्धेन, अधिकरणस्य= आश्रयस्य, अप्रसिध्या = प्रमाविषयत्वाभावेन, अव्याप्तेः = अव्याप्तिप्रसङ्गात् ।

अस्यायमाशयः । साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकधर्ममात्रावच्छिन्न-प्रतियोगिताकसाध्याभावनिष्ठा या अभावप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नाधेयता, तन्निरूपिताधिकरणताश्रयनिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वसामान्याभावो व्याप्तिरिति फलितम् । एवं च गुणत्ववान् ज्ञानत्वात्, सत्तावान् जातेरित्यादौ पूर्वोक्तरीत्याव्याप्तिवारणं भवति । तथापि घटत्वात्यन्ताभाववान् पटत्वादित्यत्राव्याप्तिः। तथाहि अत्र साध्यतावच्छेदकसम्बन्धः स्वरूपसम्बन्धः। तथा च स्वरूपसम्बन्धेन घटत्वात्यन्ताभावोनास्तीत्याकारकः साध्याभावः घटत्वात्यन्ताभावाभावः घटत्वात्मक प्रतियोगिस्वरूपः, अस्याभावीय स्वरूपसम्बन्धेनाधिकरणं क्वापि न प्रसिध्यतीति तद्धटितलक्षणस्याप्यप्रसिद्धत्वादव्याप्तिः स्यादेवेति । तथा घटान्योन्या-भाववान् पटत्वादित्यादावप्यव्याप्तिः । घटान्योन्याभावस्य योऽभावः स प्रतियोगिता-वच्छेदकात्मक घटत्वरूपः स एव साध्याभावः तथाचास्यापि अभावीयस्वरूपसम्बन्धेना-धिकरणाप्रसिध्या तद्घटितलक्षणस्यैवाप्रसिद्धेः । एवं चाव्याप्तिर्दुर्वारैवेति ।

ननु गुणत्ववान् ज्ञानत्वादित्यादिना दत्तमव्याप्तिदोषं परिहरति इति चेन्नेत्यादिना । अत्यन्ताभावेत्यादि = अत्यन्ताभावान्योन्याभावयोर्योऽत्यन्ताभावस्तस्य, सप्तम पदार्थ स्वरूपत्वात्= भावभिन्नाभावात्मको यः सप्तमपदार्थः तत्स्वरूपत्वात् ।

अस्यायमाशयः। घटत्वात्यन्ताभाववान्, घटान्योन्याभाववान् वा पटत्वादित्यादौ घटत्वात्यन्ताभावात्यन्ताभावरूपः, घटान्योन्याभावात्यन्ताभावरूपोवा यः साध्याभावः स न घटत्वरुपः, किन्तु सप्तमंपदार्थरूप एवेति स्वीक्रियते । तथा च उभयत्रापि साध्याभावस्य सप्तमपदार्थरूपत्वात् तस्याभावीयस्वरूपसम्बन्धेनाधिकरणत्वं घट एव प्रसिध्यतीति नाव्याप्तिरिति ।

ननु यन्मतेऽत्यन्ताभावान्योन्याभावयोरत्यन्ताभावस्य प्रतियोगिस्वरूपत्वं, प्रतियोगितावच्छेदक स्वरूपत्वं वा स्वीक्रियते । तन्मते अव्याप्तिः तदवस्थैवेत्यत आहऽत्यन्ताभावेत्यादि ।

**माथुरी**

अत्यन्ताभावान्योन्याभावयोरत्यन्ताभावस्य प्रतियोग्यादिस्वरूपत्वनयेतु साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताक साध्याभाववृत्ति साध्यसामान्यीय प्रतियोगितावच्छेदकसम्बन्धेन साध्याभावा-धिकरणत्वं वक्तव्यम् । वृत्यन्तं प्रतियोगिता विशेषणम् । तादृश सम्बन्धश्च वह्निमान् धूमादित्यादि भावसाध्यकस्थले

विशेषणताविशेष एव घटत्वात्यन्ता-भाववान् पटत्वादित्याद्यभावसाध्यकस्थले तु समवायादिरेव।

**माथुरीभास्करी**

अत्यन्ताभावेत्यादि = अत्यन्ताभावस्य अन्योन्याभावस्य च योऽत्यन्ताभावस्तस्य, प्रतियोग्यादिस्वरूपत्वनयेतु = अत्यन्ताभावाभावस्य प्रतियोगिस्वरूपत्वं, अन्योन्याभावात्यन्ताभावस्य प्रतियोगितावच्छेदकस्वरूपमेवेतिमते, साध्यतावच्छेदकेत्यादि = साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकधर्ममात्रावच्छिन्ना या प्रतियोगिता तन्निरूपको यः साध्याभावः तन्निष्ठा या साध्यसामान्यनिरुपिताप्रतियोगिता तदवच्छेदकसम्बन्धेन, साध्याभवाधिकरणत्वं = साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यातावच्छेदकधर्ममात्रावच्छिन्नप्रतियोगिताको योऽभावः तन्निष्ठा या आधेयता तन्निरूपिताधिकरणत्वम्, वक्तव्यम् = कथनीयम् । वृत्यन्तम् = साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभाववृत्तीतिविशेषणम्, प्रतियोगिताविशेषणम् = सम्बन्धघटक साध्यसामान्यीयप्रतियोगितायां विशेषणम्, तादृशसंबन्धश्च = साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकसाध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धश्च, विशेषणताविशेष एव = अभावीयस्वरूपसम्बन्ध एव । ननु भावसाध्यकस्थले सर्वत्रतादृशसम्बन्धः स्वरूपो भवतु, अभावसाध्यक स्थले कः सम्बन्धः इत्यत आह घटत्वेत्यादि, समवायादिरेव = क्वचित्समवायः क्वचित्संयोगादिरितिभावः। अत्यन्ताभावसाध्यकस्थले, अन्योन्याभावाभावस्य प्रतियोगित्व स्वरूपम् अन्योन्याभाव साध्यकस्थलेपि, यत्सम्बन्धावच्छिन्न प्रतियोगिताकाभावः साध्यते स एव सम्बन्धः तादृश सम्बन्धः। अन्योन्याभावभावस्य प्रतियोगितावच्छेदकत्वस्वरुपमते यत्सम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकान्योन्याभावः साध्यते स सम्बन्ध एव तादृश संबन्ध इति फलितोऽर्थ इति सुधीभिर्विभावनीयम्।

अस्यायमाशयः। साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यातावच्छेदकधर्मावच्छिन्ना या प्रतियोगिता तन्निरूपको यः साध्यभावः तन्निष्ठा या यावत्सध्यनिरूपिताप्रतियोगिता तदवच्छेदकसम्बन्धेन तादृश साध्यसामान्याभावस्याधिकरणत्वं लक्षणे प्रवेश्यमिति भावः। तथा च-वह्निमान् धूमात् इत्यादौ, साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्न -प्रतियोगिताकः यः साध्याभावः संयोगसंबन्धावच्छिन्नवह्नित्वावच्छिन्नप्रतियागिताकाभावः, संयोगेन वह्निर्नास्तीत्याकारकः तन्निष्ठा या साध्यसामान्यीयप्रतियोगिता वह्निरूपवह्न्याभावाभावनिरूपिता वह्न्यभावनिष्ठाप्रतियोगिता तदवच्छेदकसम्बन्धःस्वरुप एव, यतो हि भावसध्यकस्थले सर्वत्र साध्याभावस्य स्वरूपसम्बन्धेन यो भावः स एव साध्यस्वरूपो नान्यः। तथा च भाव- साध्यकस्थले

सर्वत्र तादृशसाध्याभावनिष्ट प्रतियोगितावच्छेदकसम्बन्धः स्वरूपसम्बन्ध एवेति पर्यवस्यति। तथा च गुणत्ववान् ज्ञानत्वात्, सत्तावान् जातेरित्यादौ तादृशसम्बन्धः स्वरूप एवेति गुणत्वाभावात्मक तादृशसाध्याभावस्य स्वरूपसम्बन्धेनाधिकरणत्वं गुणातिरिक्त एव वर्तते । तत्र ज्ञानत्वरूपहेतोः हेतुतावच्छेदकसमवायसम्बन्धेनासत्त्वान्नाव्याप्तिः । सत्ताभावात्मक तादृशसाध्याभावस्य स्वरूपसम्बन्धेनाधिकरणत्वं जात्यादावेव तत्र जातिरूपहेतोः हेतुतावच्छेदकसमवायसम्बन्धेनासत्त्वाच्च नाव्याप्तिः । अत्यन्ताभावसाध्यकस्थले यत्सम्बन्धावच्छिन्न प्रतियोगिताकाभावः साध्यते स एव तादृशसाध्यभाववृत्ति साध्यसामान्यीय प्रतियोगितावच्छेदकसम्बन्धो भवति । तथा च घटत्वात्यन्ताभाववान् पटत्वादित्यत्र समवायसम्बन्धावच्छिन्न प्रतियोगिताकाभाव एव साध्यत इति तादृशसम्बन्धः समवाय एव, तथा च समवायसम्बन्धेन घटत्वरूप घटत्वात्यन्ताभावाभावात्मक साध्याभावस्याधिकरणत्वं घट एव वर्तते, तत्र पटत्वरूपहेतोः असत्त्वेन नाव्यप्तिः ।

अन्योन्याभावसाध्यकस्थलेऽन्योन्यभावाभावस्य प्रतियोगिस्वरूपत्वमते यत्सम्बन्धावच्छिन्न-प्रतियोगिताकः अभावः साध्यते स एव तादृश सम्बन्धः । अन्योन्याभावाभावस्य प्रतियोगितावच्छेदकस्वरूपत्वमते साध्यीभूतान्योन्याभावप्रतियोगितावच्छेदकता यत्संबन्धावच्छिन्ना स-एव सम्बन्धः तादृशसम्बन्धः तथाच प्रथममते घटान्योन्याभाववान् पटत्वादित्यत्र साध्यीभूताभाव-प्रतियोगितावच्छेदकसम्बन्धः तादात्म्य इति तेन सम्बन्धेन घटान्योन्याभावाभावात्मक साध्याभावस्य घटरूपस्याधिकरणे घटे पटत्वरूपहेतोरसत्वात् नाव्याप्तिः। द्वितीयमते घटान्योन्याभावीयप्रतियोगिता-वच्छेदकता घटत्वनिष्ठा समवायसम्बन्धा-वच्छिन्ना, तथाच तेन सम्बन्धेन घटान्योन्याभावाभावात्मक साध्याभावस्य घटत्वरूपस्याधिकरणे घटे पटत्वरूपहेतोरसत्त्वान्नाव्याप्तिः । ग्रन्थविस्तरभयादितोऽधिकं न लिख्यत इत्यतोऽवशिष्टं सर्वं सद्भिर्विभावनीयमिति ।

सम्बन्ध कुक्षौ प्रविष्टं साध्यसामन्यीयप्रतियोगित्वं, तत्र प्रविष्टस्य सामान्यपदस्य प्रयोजनं दर्शयति । समवायविषयित्वादीत्यादिना ।

**माथुरी**

समवाय, विषयित्वादिसम्बन्धेन प्रमेयादिसाध्यके ज्ञानत्वादिहेतौ साध्यतावच्छेदक समवायादिसम्बन्धावच्छिन्नप्रमेयाद्यभावस्य कालिकादि -सम्बन्धेन योऽभावः सोऽपि प्रमेयतया साध्यान्तर्गतः तदीयप्रतियोगितावच्छेदक- कालिकादिसंबन्धेन साध्याभावाधिकरणे जन्यज्ञानादौ ज्ञानत्वादेर्वृत्तेरव्याप्ति-वारणाय सामान्यपदोपादानम् । साध्यसामन्यीयत्वं च यावत्साध्यनिरूपितत्वम्, स्वानिरूपकसाध्यकभिन्नत्वमितियावत् अस्यैकोक्तिमात्रपरतयागौरवस्या-दोषत्वात् । अनुमिति कारणतावच्छेदके च भावसाध्यकस्यलेऽभावीयविशेषणता-विशेषेण साध्याभावाधिकरणत्वम्। अभावसाध्यकस्थले च

यथायथं समवायादि सम्बन्धेन साध्याभावाधिकरणत्वमुपादेयम् । साध्यसाधनभेदेन कार्यकारण भेदात् ।

**माथुरीभास्करी**

समवाय विषयित्वादिसम्बन्धेन =समवायसंबन्धेन, विषयित्वसंबन्धेन वा, प्रमेयादिसाध्यके= प्रमेयस्य,अभिधेयस्य, वाच्यस्य वा साध्यत्वे, ज्ञानत्वादि हेतौ= ज्ञानत्व,कृतित्व,इच्छादिहेतौ, साध्यतावच्छेदकेत्यादि = साध्यतावच्छेदको यः समवायसम्बन्धः तेन, प्रमेयाद्यभावस्य, कालिकादिसंबन्धेन योऽभावः = तादृश प्रमेयाद्यभावनिष्ठ कालिक विषयित्वादिसम्बन्धावच्छिन्न प्रतियोगिताको योऽभावः,सोऽपि = प्रमेयाद्यभावस्य कालिकादिसम्बन्धेनाभावोपि, प्रमेयतया= प्रमेयत्वविशिष्टत्वेन, साध्यान्तर्गतः = साध्यात्मक यत्किञ्चित्प्रमेयस्वरूपः, तदीयप्रतियोगितावच्छेदक-सम्बन्धेन = प्रमेयाभावनिष्ठकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावात्मक प्रमेयनिरूपित प्रमेयाभावनिष्ठप्रतियोगितावच्छेदक कालिकादिसम्बन्धेन, साध्याभावाधिकरणे = समवाय सम्बन्धावच्छिन्न प्रमेयत्वावच्छिन्नप्रतियोगिताकाभावात्मक साध्याभावाधिकरणे, जन्यज्ञानादौ= जन्यज्ञानेच्छाकृत्यादौ, ज्ञानत्वादिः = ज्ञानत्वेच्छात्वकृतित्वादिहेतोः, वृत्तेः= सत्त्वात्, अव्याप्तिवारणाय = प्रसक्ताव्याप्तिनिराकरणाय, सामान्यपदोपादानम्= सम्बन्धान्तर्गत साध्यसामान्यप्रतियोगितायां सामान्यदल निवेशः ।

अस्यायमाशयः । संबन्धकुक्षौ सामान्यदलानुपादाने तादृश साध्याभाववृत्ति यत्किञ्चित्साध्यीय-प्रतियोगितावच्छेदकसम्बन्धेन साध्याभावाधिकरणत्वं पर्यवस्यति । तथा च समवायसम्बन्धेन, विषयित्वसम्बन्धेन वा प्रमेयस्य साध्यत्वे ज्ञानत्वहेतावव्याप्तिः । तथाहि साध्यतावच्छेदक-सम्बन्धावच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकसाध्याभावः समवायेन विषयित्वेन वा प्रमेयं नास्तीत्यभावः। अस्य कालिकसम्बन्धेनाभावः न प्रमेयाभाव प्रतियोगि यावत्प्रमेयस्वरूपः उभयोः समनियतत्वाभावात् , किन्तु सप्तमपदार्थस्वरूपः । तथापि साध्यस्वरूप एव , सप्तमपदर्थस्यापि प्रमेयत्वात् । तथा च यत्किञ्चित् साध्यनिरूपित प्रतियोगितावच्छेदकसम्बन्धपदेन कालिकसम्बन्धोऽपि धर्तुं शक्यतेऽतः कालिकसंबन्धेन तादृश साध्याभावात्मक प्रमेयाभावाधिकरणं जन्यज्ञानमपि तत्र ज्ञानत्वरूपहेतोः सत्त्वादव्याप्ति-र्दुर्वारैवेत्यतः तत्र सामान्यपदनिवेश इति। ननु तत्र सामान्यपदनिवेशे कथमव्याप्तिवारणं स्यादित्यत आह साध्यासामान्यीयत्वं चेत्यादि । यावत्साध्यनिरूपितत्वम् = यावन्तिसाध्यानि तत्तनिरूपितत्वम् ।

अस्यायमाशयः । समवायसम्बन्धेन विषयित्वसंबन्धेन वा प्रमेयाभावस्य कालिकसम्बन्धेन योऽभावस्तस्य यत्किञ्चित्साध्यस्वरूपत्वेऽपि समवायेन विषयित्वसम्बन्धेन वा वृत्तिमद् यत् भावात्मकं प्रमेयं तत्स्वरूपत्वं नास्तीति कालिकसम्बन्धावच्छिन्नप्रतियोगिताकप्रमेयाभाव- प्रतियोगितायां

समवायसम्बन्धेन विषयित्वसम्बन्धेन वृत्तमत्प्रमेयात्मक साध्यनिरूपितत्वं नास्त्येव । तथाच यावत्साध्यनिरूपितप्रतियोगितापदेन तदभावीय कालिकसंबन्धावच्छिन्न प्रतियोगिता धर्तुं न शक्यते। किन्तु समवायेन विषयित्वेन वा सम्बन्धेन प्रमेयाभावस्य स्वरूपेण योऽभावः, स एव यावत्साध्यस्वरूप इति तन्निरूपितत्वं स्वरूपसंबन्धावच्छिन्नप्रमेयाभावनिष्ठ प्रतियोगितायामेवास्ति । तथा च प्रकृते यावत्साध्यनिरूपित प्रतियोगितावच्छेदकसंबन्धः स्वरूपसम्बन्ध एव । तेन सम्बन्धेन तादृश साध्याभावाधिकरणत्वं ज्ञानातिरिक्तस्यैवातः तत्र ज्ञानत्वहेतोरसत्त्वान्नाव्याप्तिरिति ।

ननु साध्यसामान्यीयत्वं यावत्साध्यनिरूपितत्वमिति यद्युच्येत तदा तद्रूपवान् तद्रसादित्यादि एकव्यक्ति साध्यक सद्धेतावव्याप्तिस्तत्र साध्यव्यक्तेरेकत्वेन यावत्साध्यनिरूपितत्वस्या-प्रसिध्या तद्घटक लक्षणस्याप्यप्रसिद्धेरित्यत आह स्वानिरूपकेत्यादि साध्यनिरूपितत्वाभाव-विशिष्ठप्रतियोगिताभिन्नत्वमर्थः ।

अस्यायमाशयः । साध्याभावनिष्ठ साध्यसामान्यीयप्रतियोगितापदेन या प्रतियोगिता ग्राह्यत्वेन अभिमता, तद्भिन्न प्रतियोगित्वमेवात्र स्वपदेन ग्राह्यम् , तथा च स्वस्य न निरुपितं साध्यं यस्य स्वस्य तत् स्वानिरूपकसाध्यकं तद्भिन्नं यत्प्रतियोगित्वं तदेव यावत्साध्य-निरुपितप्रतियोगित्वपदेन ग्राह्यम्। एवञ्च तद्रूपवान् तद्रसादित्यादौ यावत्साध्यस्याप्रसिद्धत्वेऽपि नाव्याप्तिः । तथाहि, साध्यमत्र तद्रूपं समवायेन तद्रूपाभाव एव तादृश साध्याभावः तस्य स्वरूपेण योऽभावः स एव साध्यस्वरूपः , तन्निरूपित स्वरूपसम्बन्धावच्छिन्नप्रतियोगितैव- साध्यसामान्यीयप्रतियोगिता तत्र साध्यनिरूपितत्वाभावविशिष्टप्रतियोगिताभिन्नत्वस्यसत्त्वात्, स्वानिरुपकसाध्यकभिन्नत्वपदेन साध्यनिरुपितत्वाभावविशिष्टप्रतियोगिताभिन्नत्वस्य विवक्षणात् । वह्निमान् धूमात् इत्यादौ वह्न्यभावनिष्ठ स्वरूपसम्बन्धावच्छिन्नप्रतियोगिता न साध्यनिरूपितत्वा-भावविशिष्टा । किन्तु कालिकादिसम्बन्धावच्छिन्नप्रतियोगिता तद्भेदस्य स्वरूपसम्बन्धा-वच्छिन्न वह्न्यभावनिष्ठप्रतियोगितायां सत्त्वात् तस्याः लक्षणघटकत्वात् तदवच्छेदक स्वरूपसम्बन्धेन वह्न्यभावरूपसाध्याभावाधिकरणे जलह्रदादौ हेतोरसत्त्वाल्लक्षणसमन्वयः । समवाय विषयत्वादिसम्बन्धेन प्रमेयवान् ज्ञानत्वादित्यादौ साध्यतावच्छेदकसम्बन्धेन प्रमेयाभावस्य कालिकेन योऽभावस्तन्निरूपित कालिकसम्बन्धावच्छिन्नप्रमेयाभाव निष्ठप्रतियोगितायां सप्तमपदार्थात्मक प्रमेयरूप साध्यनिरूपितत्वस्य सत्त्वेऽपि समवायादिना वृत्तिमत्प्रमेयात्मक साध्यनिरूपितत्वाभावस्यसत्त्वेन तत्र तन्निरूपितत्वाभावविशिष्ट प्रतियोगिता-भिन्नत्वस्यासत्त्वेन तस्याः लक्षणघटकत्वासंभवात् तत्प्रतियोगितावच्छेदक कालिकसम्बन्ध-मादायाव्याप्तिर्दातुं न शक्यते । किञ्च तादृश प्रमेयाभावनिष्ठस्वरूपसम्बन्धावच्छिन्न प्रतियोगितायाः साध्यानिरूपित प्रतियोगिताभिन्नत्वेन

तस्या एव लक्षणघटकत्वेन तदवच्छेदक स्वरूपसम्बन्धस्यैव लक्षणघटकत्वात् । तेन सम्बन्धेन साध्याभाववति ज्ञानातिरिक्ते ज्ञानत्वहेतोरसत्वान्नाव्याप्तिः इति ।

ननु सर्वत्र व्याप्तौ स्वरूपादिसम्बन्धापेक्षयात्यन्तं गुरूभूतस्यैतादृश -सम्बन्धस्यनिवेशे महद्गौरवं स्यादित्यताह अस्येत्यादि । अस्य = साध्यतावच्छेदक -सम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभाववृत्ति साध्यसामान्यीय प्रतियोगितावच्छेदकसम्बन्धपदस्य, एकोक्तिमात्रपरतया = भावाभावसाध्यकव्याप्तिप्रविष्ट स्वरूपसमवायादिनां सर्वेषां सम्बन्धानामेकेनपदेन बोधः करणीय इत्यभिप्रायेणोच्चरितत्वेन, गौरवस्येत्यादि = शब्दगौरवस्यादोषत्वादिति । तथाच किं फलितमित्यत आह अनुमितित्यादि । अनुमितिकारणतावच्छेदके = व्याप्तिज्ञान निष्ठंयदनुमितिकारणत्वं तदवच्छेदकीभूतव्याप्तावित्यर्थः, भावसाध्यकस्थले = घटपटादिभावपदार्थानां साध्यत्वे, अभावीयविशेषणताविशेषेण = अभाव-प्रतियोगिकस्वरूपसम्बन्धेन, साध्याभावाधिकरणत्वम् = साध्यतावच्छेदकसम्बन्धावच्छिन्न साध्यतावच्छेदकधर्ममात्रावच्छिन्नप्रतियोगिताकाभावाधिकरणत्वम्, अभावसाध्यकस्थले च= सप्तमपदार्थात्मकाभावस्य साध्यत्वे च यथायथम्= यथायोग्यम्, समवायादिसम्बन्धेन = समवाय संयोग कालिकादिसम्बन्धेन, साध्याभावाधिकरणत्वं निवेशनीयमिति भावः ।

अस्यायमाशयः । तादृशसाध्याभाववृत्तिसाध्यसामन्यीयप्रतियोगितावच्छेदक-सम्बन्धपदेनैकेनैव तादृशप्रतियोगितावच्छेदकत्वोपलक्षितानां संयोगसमवायादिसम्बन्धानां लक्षणे प्रवेशः कार्य इति बोधनार्थमेव तथा कथितं, न तु तादृश प्रतियोगितावच्छेदकसम्बन्धत्वेन- तादृश प्रतियोगितावच्छेदकसंबन्धस्य प्रवेशार्थम्, एवं चाभावसाध्यकस्थले स्वरूपसंबन्धेनैव साध्याभावाधिकरणत्वम्, अत्यन्ताभावसाध्यकस्थले यत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावः साध्यते तेन सम्बन्धेन साध्याभावाधिकरणत्वं । अन्योन्याभावसाध्यकस्थले यत्सम्बन्धावच्छिन्ना-वच्छेदकताकप्रतियोगिताकाभावः साध्यते तेन सम्बन्धेन साध्याभावाधिकरणत्वं प्रविष्टमिति न गौरवमिति । ननु तथापि स्वरूपसंयोगादीनामनेकेषां संबन्धानां लक्षणघटकत्वे तत्संबन्धादिभेदेन व्याप्तिलक्षणानां नानात्वं दुर्वारमेवेत्यत आह साध्यसाधनभेदेनेत्यादि, साध्यसाधनभेदेन = साध्यस्यघटादेः साधनस्यपटादेर्भेदेन कार्यकारणभावभेदात् , कार्यस्य = अनुमितेः,कारणस्य = व्याप्तिज्ञानस्य च, भेदात् = नानात्वात् ।

अस्यायमाशयः। वह्निविधेयकानुमितिकार्यं प्रति वह्न्यभावघटितव्याप्तिज्ञानस्य, पटादिविधेयकानुमितिं प्रति पटाद्यभावघटितव्याप्तिज्ञानस्य च कारणत्वं स्वीकार्यमेव । अन्यथा अतिप्रसङ्गात्। तथा च सम्बन्धादिभेदेनापि कार्यकारणभावानामानन्त्यमनिवार्यमेवेति तद्गौरवं न दोषाधायकमिति स्वरूपसमवायादिसम्बन्धेन साध्याभावाधिकरणत्वप्रवेशे न कोऽपि दोष इति ।

ननु एतावता साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकधर्ममात्रावच्छिन्न - प्रतियोगिताकसाध्याभावनिष्ठा, या साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्न - प्रतियोगिताकसाध्याभाववृत्ति साध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नाऽधेयता, तन्निरूपिताधिकरणताश्रयनिरूपित हेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वसामान्याभावो व्याप्तिरिति फलितम् । एवमपि घटान्योन्याभाववान् पटत्वादित्यादावव्याप्तिः स्यादित्याशङ्क्य समाधत्ते न च तथापीत्यादिना ।

**माथुरी**

न च तथापि घटान्योन्याभाववान् पटत्वादित्यत्राऽन्योन्याभाव साध्यकस्थले घटत्वादिरूपे साध्याभावे न साध्यप्रतियोगित्वं न वा समवायादि-सम्बन्धस्तदवच्छेकस्तादात्म्यस्येवावच्छेदकत्वात् इत्यव्याप्तिस्तदवस्थेति वाच्यम्, अत्यन्ताभावाभावस्य प्रतियोगिरूपत्वेन (घटभेदस्य घटभेदात्यन्ता-भावत्वावच्छिन्नप्रतियोगिताकाभावरूपतया) घटभेदात्यन्ताभावरूपस्य घटभेद-प्रतियोगितावच्छेदकीभूतघटत्वस्यापि समवायेन घटभेदप्रतियोगित्वात् ।

न च अन्यत्रात्यन्ताभावाभावस्य प्रतियोगिरूपत्वेऽपि घटादिभेदात्यन्ता-भावत्वावच्छिन्नाभावो न घटादि भेदस्वरूपः ।. किन्तु तत्प्रतियोगिता-वच्छेदकीभूत घटत्वात्यन्ताभावस्वरूप एवेति सिद्धान्त इति वाच्यम् ।

यथाहि घटात्वावच्छिन्नघटवत्ताग्रहे घटात्यन्ताभावाग्रहात् घटात्यन्ता-भावाभाव व्यवहाराच्च घटात्यन्ताभावाभावो घटस्वरूपस्तथा घटभेदवत्ताग्रहे घटभेदात्यन्ताभावाग्रहात् घटभेदात्यन्ताभावाभावव्यवहाराच्च घटभेद एव तदत्यन्ताभावत्वावच्छिन्नप्रतियोगिताकाभाव इति तत्सिद्धान्तो न युक्ति सह इति ।

विनिगमकाभावेनापिघटत्वत्वावच्छिन्न प्रतियोगिताकात्यन्ताभाववद् घटभेदस्यापि घटभेदात्यन्ताभावाभावत्वसिद्धेरप्रत्यूहत्वाच्च,अत एव तादृश -सिद्धान्तो नोपाध्यायसम्मतः। अत एवच''अभावविरहात्मत्वं वस्तुनः प्रतियोगिता'' इत्याचार्याः । अन्यथा घटभेदात्यन्ताभावप्रतियोगिनि घटभेदे तल्लक्षणाव्याप्त्यापत्तेः । अन्योन्याभावप्रतियोगितावच्छेदकघटत्वात्यन्ताभावे तल्लक्षणस्यातिव्याप्त्यापत्तेश्च । नचैवं घटत्वत्वावच्छिन्नप्रतियोगिताकघटत्वा-त्यन्ताभावस्यापि घटभेद स्वरूपापत्तिरिति वाच्यम्। तदत्यन्ताभावत्वावच्छिन्न प्रतियोगिताकाभावस्यैव तत्स्वरूपाभ्युपगमात्, तद्वत्ताग्रहे तादृश

तदत्यन्ता-भावाभावस्यैव व्यवहारात् उपाध्यायैः घटत्वत्वावच्छिन्नप्रतियोगिताक घटत्वात्यन्ताभावस्य घटभेदस्वरूपत्वाभ्युपगमाच्च ।

**माथुरीभास्करी**

तथापि = तादृश साध्याभाववृत्तिसाध्यसामान्यीय प्रतियोगितावच्छेदकसम्बन्धेन साध्याभावाधिकरणत्वं लक्षणेप्रवेशयोक्तस्थलेषु दोषवारणेऽपि, घटान्योन्याभाववान् = तादात्म्यसंबन्धावच्छिन्न-घटत्वावच्छिन्नप्रतियोगिताकाभाववान्, पटत्वादित्यत्र= पटत्वादिहेतुके, (अत्र घटत्वत्वादिति प्राचीन-हस्तलिखितपुस्तकेषु दृश्यते स एव पाठः साधीयानन्यथाग्रिमेणाव्याप्तितादवस्थ्यं इति ग्रन्थेन विरोधापत्तेः । पटत्वहेतुकस्थले अव्याप्तेः असंभवात् घटत्वत्वहेतुक स्थल एव संभवाच्च तादवस्थ्यपदस्य लक्षणामाश्रित्य ग्रन्थविरोधपरिहारोऽपि गौरवान्नादरणीय इति दिक् ) । अन्योन्याभावसाध्यकस्थले= अन्योन्याभावत्वेन भेदसाध्यकस्थले, घटत्वादिरूपे = घटत्वाद्यात्मके, साध्याभावे= घटान्योन्याभावात्मकसाध्यस्याभावे, न साध्यप्रतियोगित्वम् = घटान्योन्याभावात्मक साध्यनिरूपित प्रतियोगित्वस्य घट एव सत्त्वेन घटत्वेऽसत्त्वादिति भावः ।

ननु घटान्योन्याभावाभावस्य यथा प्रतियोगितावच्छेदकघटत्वात्मकत्वं स्वीक्रियते तथा घटात्मक प्रतियोगिस्वरूपत्वमपि स्वीक्रियते । अयं घटः एतत्वादित्यत्र ग्रन्थकारेण स्वयमेव तथोक्तत्वात् । तथाच प्रकृते साध्याभावे घटे साध्यनिरूपितप्रतियोगित्वमत्स्येवेत्यत आह नवा समवायादीति । न वा समवायादि सम्बन्धः = नैव तादात्म्यभिन्नसम्बन्धः, तदवच्छेदकः= साध्याभाववृत्तिसाध्यसामान्यीय प्रतियोगितावच्छेदकः,तर्हि कोऽत्र तादृशप्रतियोगितावच्छेदक - सम्बन्ध इत्यत आह तादात्म्यस्यैव = तादात्म्यसम्बन्धस्यैव, तदवच्छेदकत्वात् = तादृशसाध्याभाववृत्ति साध्यसामान्यीय प्रतियोगितावच्छेदकसम्बन्धत्वात्, इति = अस्माद्धेतोः, अव्याप्तिस्तदवस्थैव= घटान्योन्या-भाववान् घटत्वत्वादित्यादि स्थलेऽव्याप्तिर्दुर्निवारैवेतिभावः ।

न च घटान्योन्याभाववानित्यादेरयमाशयः । घटान्योन्याभाववान् पटत्वात्, घटत्वत्वाद्धेत्यादौ साध्याभाववृत्ति साध्यसामान्यीय प्रतियोगितावच्छेदकसम्बन्धपदेनघटान्योन्याभावाभावात्मक-साध्याभाववृत्तिः घटान्योन्याभावाभावनिरूपिता या प्रतियोगिता तदवच्छेदकसम्बन्धो गृहीतश्चेत्कथमपि लक्षणसमन्वयः स्यात् । तदेव न संभवति । तथाहि प्रकृते साध्याभावः घटान्योन्याभावाभावः, स च घटत्वस्वरूपः, तन्निष्ठा या प्रतियोगिता तस्यां घटन्योन्याभावाभावाभावात्मक घटभेदनिरूपितत्वं नस्थास्यति घटभेदनिरूपितत्वस्य घटनिष्ठ प्रतियोगितायामेव सत्त्वात् । तथाच साध्याभावनिष्ठ प्रतियोगिता न साध्यनिरूपिता, साध्यनिरूपितप्रतियोगिता न साध्याभावेऽतोऽत्र साध्याभावनिष्ठ साध्यसामान्यीय-प्रतियोगिता न प्रसिध्यत्यतोऽव्याप्तिः । ननु घटान्योन्याभावाभावस्य प्रतियोगितावच्छेदकीभूत घटत्व स्वरूपाभ्युपगम एव अप्रसिद्धिः । प्रतियोगिभूत घटस्वरूपाभ्युपगमे नाप्रसिद्धिः । साध्याभावात्मक घटनिष्ट

घटभेदनिरूपितप्रतियोगितायाः सर्वमतसिद्धत्वात् । तथा च नाव्याप्तिरितिचेन्न प्रकृते साध्याभावस्य घटत्वस्वरूपत्वमिवघटस्वरूपत्वं अपि अङ्गीक्रियेत यदि, तदा नाप्रसिद्धिः किन्तु साध्याभावात्मक घटनिष्ठ घटभेदनिरूपिता या प्रतियोगिता तदवच्छेदकसंबन्धः तादात्म्य एवेति सर्वेषां सिद्धान्तः । तथा च घटान्योन्याभाववान् घटत्वत्वादित्यादावव्याप्तिः । तथाहि साध्याभावोघटत्वरूपो घटरूपश्चातः तादृशप्रतियोगितावच्छेदकत्तादात्म्यसम्बन्धेन घटत्वात्मक साध्याभावस्य अधिकरणे घटत्वे घटत्वत्वरूपहेतोः सत्त्वादिति ।

न च घटान्योत्याभावानित्यादिना प्रदर्शितमाक्षेपं परिहर्तुं युक्तिंदर्शयत्यन्ताभावाभावस्येत्यादिना । अत्यन्ताभावाभावस्य = घटपटाद्यन्ताभावाभावस्य, प्रतियोगिरूपत्वेन= घटपटादिरूपप्रतियोगिस्वरूपत्वाभ्युपगमेन, घटभेदस्य = प्रकृते साध्यीभूतघटभेदस्य घटभेदात्यन्ताभावत्वावच्छिन्नप्रतियोगिताकाभावरूपतया साध्याभावात्मको यो घटभेदात्यन्ताभावः तदभावस्वरूपतया, घटभेदात्यन्ताभावरूपस्य = घटभेदात्यन्ताभावात्मक साध्याभावस्य, घटभेदप्रतियोगितावच्छेदकीभूतघटत्वस्यापि = घटभेदप्रतियोगितावच्छेदकीभूतं यद्घटत्वं तस्यापि, समवायसम्बन्धेन घटभेदप्रतियोगित्वात् = साध्यीभूत घटभेदनिरूपित समवायसम्बन्धावच्छिन्न प्रतियोगित्वाक्रान्तत्वात् ।

अस्यायमाशयः । यथा घटनिष्ठा प्रतियोगिता घटाभावनिरुपिता यथा वा घटाभावनिष्ठा घटाभावाभावनिरूपिता तथा घटत्वात्मकघटभेदाभावनिष्ठाप्रतियोगिताऽपि घटभेदाभावाभावनिरूपितैव । तथा च घटत्वात्मक साध्याभावनिष्ठायाः घटभेदात्मक घटभेदाभावाभावाभावनिरूपितायाः प्रसिद्धत्वात् तदवच्छेदकसम्बन्धोऽपि समवायः प्रसिध्यति । तथा च तादृश साध्याभाववृत्ति प्रतियोगितावच्छेदक समवायसम्बन्धेन घटत्वात्मक साध्याभावाधिकरणे घटे घटत्वत्वरूप हेतोरसत्त्वान्नाव्याप्तिः । अस्मिन् मतेऽन्योन्याभावाभावः प्रतियोगितावच्छेदकस्वरूप एव । न तु प्रतियोगिस्वरूपः । तथाच्च तादात्म्यसंबन्धस्य तादृशसाध्याभाववृत्ति प्रतियोगितावच्छेदक सम्बन्धत्वाभावादृर्शितरीत्याऽपि नाव्याप्तिरिति ।

उक्तरीत्यादर्शिताव्याप्तिवारणं न भवतीत्याशङ्कते नचान्यत्रेत्यादिना ।

अन्यत्र = अन्योन्याभावात्यन्ताभावाभावातिरिक्तस्थले, अत्यन्ताभावाभावस्य = घटाद्यत्यन्ताभावाभावस्य, प्रतियोगिरूपत्वेऽपि = घटादिप्रतियोगिस्वरूपत्वेऽपि, घटादिभेदेत्यादि= साध्यीभूतो यो - घटादिभेदस्तदत्यन्ताभावत्वावच्छिन्नप्रतियोगिताकोयोऽभावः सः, न घटादि भेदस्वरूपः= स्व प्रतियोग्यात्मक घटादिभेदस्वरूपो न भवतीति भावः । तर्हि किं स्वरूप इत्यत आह, तत्प्रतियोगितावच्छेदकेत्यादि । तत्प्रतियोगितावच्छेदकीभूतम् = साध्यीभूतघटभेदप्रतियोगितावच्छेदकीभूतं यद् घटत्वं तदत्यन्ताभावत्मक एवेति भावः ।

अस्यायमाशय: । घटाद्यत्यन्ताभावाभावस्यैव घटाद्यात्मकप्रतियोगि स्वरूपत्वंस्वीक्रियते। न तु भेदात्यन्ताभावाभावस्य । तथा च घटान्योन्याभाववान् घटत्वत्वादित्यत्र साध्याभावनिष्ठाया: घटभेदात्यन्ताभावाभावनिरूपितप्रतियोगिताया: प्रसिद्धत्वेऽपि घटभेदात्यन्ताभावाभावस्य साध्यस्वरूपत्वा-भावात् साध्यनिरूपित साध्याभाववृत्ति प्रतियोगिताऽप्रसिद्धैवेति अव्याप्तिस्तदवस्थैवेति ।

न चान्यत्रेत्यादिना कृतां शङ्कां निरसितुं युक्तीर्दर्शयति यथाहीत्यादिना । घटत्वावच्छिन्न-घटवत्ताग्रहे = घटवद्भूतलमित्याकारकनिश्चये सति, घटात्यन्ताभावाग्रहात् = घटाभाववद् भूतलमित्या-कारकज्ञानानुदयात्, घटात्यन्ताभावाभावव्यहाराच्च = घटात्यन्ताभावाभाववद् भूतलमित्यादिशब्द-प्रयोगात्मकव्यवहारसंभवाच्च, घटात्यन्ताभावाभाव:= घटात्यन्ताभावो नास्तीत्याकारक:, घटस्वरूप एव = प्रथमाभाव प्रतियोग्यात्मक घटस्वरूप एव, तथा= तयारीत्या, घटभेदवत्ताग्रहे = घटभेदवद् भूतलमित्यादि-निश्चये सति, घटभेदात्यन्ताभावाग्रहात्= घटभेदात्यन्ताभाववद् भूतलं इत्याकारकज्ञानानुदयात्, घटभेदात्यन्ताभावाभावव्यवहाराच्च = घटभेदात्यन्ताभावाभाववद् भूतलमित्यादि शब्दप्रयोगस्य लोके-ऽनुभूयमानत्वाच्च,घटभेद एव= घटभेदस्वरूप एव नतु घटत्वात्यन्ताभावस्वरूप इतिभाव:, तदत्यन्ताभावत्वा-वच्छिन्नप्रतियोगिताकाभाव इति = घटभेदात्यन्ताभावत्वावच्छिन्नप्रतियोगिताकाभाव:, इति = एतस्मात् कारणात्, तत्सिद्धान्त: = घटभेदात्यन्ताभावाभावो घटत्वात्यन्ताभावस्वरूप एवेति सिद्धान्त:, न युक्ति सह: = न प्रामाणिक: ।

अस्यायमाशय: । घटाद्यन्ताभावाभाव एव प्रतियोगिस्वरूप: न तु घटभेदात्यन्ताभावाभाव इति कथनं न समीचीनं प्रमाणाभावात्। तस्य प्रतियोगिस्वरूपत्वेऽस्यापि प्रतियोगिरूपत्वमनिवार्यमेव उभयत्र प्रमाणस्य समानत्वात्। तथाहि यत्र घटज्ञानं तत्रैव घटाभावाभावज्ञानं जायते तथा घटज्ञानमिव घटाभावाभावज्ञानमपि घटाभावज्ञानं प्रति प्रतिबन्धकमिति घटाभावाभावो घटस्वरूप एवेति स्वीक्रियते। एवं यत्र घटभेदज्ञानं जायते तत्रैव घटभेदाभावाभावज्ञानं जायते। तथा घटभेदाभावाज्ञानं प्रति घटभेदज्ञानमिव-घटभेदाभावाभावज्ञानमपि प्रतिबन्धकमिति घटभेदाभावाभावो घटभेद स्वरूप एवेति प्रकृते घटभेदाभावाभावात्मक साध्यनिरूपिताया: घटभेदाभावात्मक साध्याभावनिष्ठाया: प्रतियोगिताया: प्रसिद्धत्वात् तदवच्छेदक समावयसंबन्धेन घटत्वात्मक साध्याभावाधिकरणे घटे घटत्वत्वात्मक हेतोरसत्त्वान्नाव्याप्तिरन्योन्याभावाभावस्य प्रतियोगितावच्छेदकस्वरूपत्वादेवेति बोध्यमिति ।

अन्योन्याभावाभावस्य प्रतियोगितावच्छेदक स्वरूपत्वमेवेतिमते घटान्योन्याभाववान् घटत्वत्वा-दित्यादौ साध्याभाववृत्ति साध्यसामान्यीय प्रतियोगित्वं प्रसिध्यत्येवेति प्रकारान्तरेण कथयन्ति-विनिगमकाभावेनापीत्यादिना । विनिगमकाभावेनापि = उभयो: पक्षयोर्मध्ये एकतरपक्षसाधक युक्त्यभावेनापि, घटत्वत्वावच्छिन्नेत्यादि = घटत्वत्वावच्छिन्नप्रतियोगिताको योऽत्यन्ताभावस्तदभाववत्, घटभेदस्यापि = साध्यीभूत घटान्योन्याभावस्यापि,घटभेदात्यन्ताभावाभावत्वसिद्धे:= घटभेदात्यन्ताभावाभावस्वरूपत्वसिद्धे:, अप्रत्यूहत्वात् = अव्याहतत्वात्, अत एव = एकतरपक्षसाधकप्रमाणाभावादेव, तत्सिद्धान्त: = घट-

भेदात्यन्ताभावाभावो घटत्वात्यन्ताभावस्वरूप एवेति सिद्धान्तः, नोपाध्यायसम्मतः = गङ्गेशोपाध्याय-मतसिद्धो न भवतीति भावः । अत एव च = घटभेदस्य घटभेदात्यन्ताभावाभावस्वरूपत्वादेव, अभाव-विरहात्मत्वम् = अभावाभावस्वरूपत्वमेव, वस्तुनः प्रतियोगितेति = वस्तुनिष्ठ प्रतियोगित्वमिति, आचार्याः= उदयनाचार्याः आहुरितिभावः ।

अस्यायमाशयः । घटभेदात्यन्ताभावाभावो घटत्वात्यन्ताभावस्वरूप एव भवति । न तु घटभेदस्वरूप इत्यत्र किमपि नियामकं नास्ति । अतः घटभेदात्यन्ताभावाभावो घटभेदस्वरूपोऽपीति-गन्तव्यमेव । एतस्मादेव कारणादुदयनाचार्या अभावाभावत्वं प्रतियोगित्वमित्यूचुः । एवं चोदयनाचार्यमतेऽपि घटभेदात्यन्ताभावाभावो घटभेदस्वरूपो भवतीति प्रकृते नाव्याप्तिरिति ।

नन्वभावाभावत्वस्योदयनमते प्रतियोगित्वस्वरूपत्वे सिद्धेऽपि घटभेदात्यन्ताभावा-भावस्य घटभेदस्वरूपत्वं कथं सेत्स्यतीत्यत आहान्यथेत्यादिना । अन्यथा = उदयनाचार्य मते घटभेदात्यन्ताभावाभावस्य घटभेदानात्मकत्वे, घटत्वाभावात्मकत्वे च, घटभेदेत्यादि = घटभेदात्यन्ता-भावस्य प्रतियोगिभूतो यो घटभेदस्तस्मिन्, तल्लक्षणाव्याप्त्यापत्तेः, तल्लक्षणस्य= प्रतियोगिलक्षणस्य अव्याप्त्यापत्तेः = घटभेदात्मक लक्ष्येऽसत्त्वेनाव्याप्तिदोषेणदुष्टत्वापत्तेः । तत्र वर्तमानस्यातिव्याप्तिदोषस्या-प्रदर्शने ग्रन्थस्य न्यूनता स्यादिति विचार्य न्यूनता परिहाराय अतिव्याप्तिदोषमपि दर्शयत्यन्योन्याभावेत्यादिना, अन्योन्याभावप्रतियोगितावच्छेदके = अन्योन्याभावप्रतियोगितावच्छेदकीभूते, घटत्वात्यन्ताभावे = घटत्वत्वावच्छिन्न प्रतियोगिताकात्यन्ताभावे, तल्लक्षणस्य= अभावविरहात्मत्वरूपप्रतियोगिलक्षणस्य, अतिव्याप्त्यापत्तेश्च = अतिव्याप्तिदोषेण दुष्टत्वापत्तेश्च ।

अस्यायमाशयः । घटभेदात्यन्ताभावाभावस्य घटभेदानात्मकत्वे घटत्वात्यन्ताभावात्मकत्वे च उदयनाचार्योक्त प्रतियोगिलक्षणस्य अभावाभावात्मकस्याव्याप्तिदोषोऽतिव्याप्तिदोषश्च प्रसज्यते । तथाहि तन्मते घटभेदात्यन्ताभावप्रतियोगिभूतेघटभेदे लक्ष्ये घटभेदान्यन्ताभावाभावत्वरूपप्रतियोगिलक्षणस्यासत्त्वात्, तथा घटभेदात्यन्ताभावप्रतियोगिभिन्ने घटत्वात्यन्ताभावेऽलक्ष्ये घटभेदात्यन्ताभावाभावत्वरूप प्रतियोगि-लक्षणस्य सत्त्वादतिव्याप्तिश्च । तथाचैतद्दोषपरिहाराय घटभेदात्यन्ताभावाभावो घटभेदस्वरूपएवोदयनाचार्येण स्वीकृतमिति वोद्धव्यमिति ।

घटभेदस्य घटभेदात्यन्ताभावाभाव स्वरूपत्वाभ्युपगमे दोषान्तरमाशङ्क्य समाधत्ते नचैवमित्यादिना । एवम् = घटभेदवत्ताग्रह इत्याद्युक्त्याऽस्य घटभेदात्यन्ताभावाभावस्य घटभेदस्वरूपत्वाभ्युपगमे, घटत्वत्वेत्यादि = घटत्वत्वावच्छिन्नप्रतियोगिताको यो घटत्वात्यन्ताभावस्तस्यापि, घटभेदस्वरूपत्वापत्तिः = घटान्योन्याभावत्वापत्तिः ।

अस्यायमाशयः । यत्र घटभेदोवर्तते तत्रैव घटभेदात्यन्ताभावाभावो वर्ततेऽतः उभयोः समनैयत्यात् घटभेदात्यन्ताभावाभावो घटभेद इति यथास्वीकृतं, तथा यत्र घटभेदो वर्तते तत्रैव घटत्वात्यन्ताभावोऽपि वर्तत इति घटत्वात्यन्ताभावस्यापि घटभेदत्वापत्तिः । तथाच अत्यन्ताभावस्यात्यन्ताभावत्वमेव व्याहन्यत इति ।

नचैवमित्यादिनाकृतायाः शङ्कायानिराकरणाय युक्तिंदर्शयति ''तदत्यन्ताभावेत्यादिना''। तदत्यन्ताभावेत्यादि = अत्र तत्पदेन घटभेदोग्राह्यः। तथा च घटभेदात्यन्ताभावत्वावच्छिन्नप्रतियोगिताकोयोऽभावस्तस्यैवेतिभावः। तत्स्वरूपत्वाभ्युपगमात् = घटभेदस्वरूपत्वाभ्युपगमात् । तत्रैवहेतुमाह तद्वत्ताग्रह इत्यादिना । तद्वत्ताग्रहे=घटभेदवत्ताग्रहे, तादृशेत्यादि = घटभेदत्वावच्छिन्नघटभेदनिष्ठप्रतियोगिताकात्यन्ताभावाभावस्यैव, प्रयोगात् उभयत्रैवकारेण घटत्वात्यन्ताभावो व्यवच्छिद्यते ।

अस्यायमाशयः। समनैयत्यहेतुना घटभेदस्वरूपत्वं घटभेदात्यन्ताभावाभावस्य न स्वीक्रियते किन्तु तत्तदत्यन्ताभावाभावस्यैव तत्स्वरूपत्वमिति नियमात् । तथा च प्रकृतेघटभेदात्यन्ताभावाभावस्यैव घटभेदस्वरूपत्वं न तु घटत्वात्यन्ताभावस्येति घटत्वात्यन्ताभावस्य घटभेदत्वापत्तिः कथमपि न संभवतीति ।

इष्टापत्त्याऽपि दर्शितशङ्कांवारयत्युपाध्यायैरित्यादिना । उपाध्यायैः = गङ्गेशोपाध्यायैः, घटत्वत्वेत्यादि = घटत्वात्वावच्छिन्न प्रतियोगिताको यो घटत्वात्यन्ताभावस्तस्य, घटभेदस्वरूपत्वाभ्युपगमात् = घटान्योन्याभावस्वरूपत्वस्वीकारात् ।

अस्यायमाशयः। घटभेदापेक्षया घटत्वात्यन्ताभावो भिन्न इति यदुच्येत तदा उक्तापत्तिर्दर्शयितुं शक्यते । तदेव न स्वीक्रियते समनियताभावयोरैक्ये तयोरप्यैक्याभ्युपगमादतः आपत्तिप्रदर्शनं नोचितमिति ।

सम्बन्धांशे प्रविष्टस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्न - प्रतियोगिताकसाध्याभाववृत्तित्वात्मकविशेषणस्य प्रयोजनं दर्शयितुं शङ्कते नचैवमित्यादिना ।

**माथुरी**

**नचैवं साध्यसामान्यीय प्रतियोगितावच्छेदकसम्बन्धेनैव साध्याभावा-धिकरणत्वं विवक्ष्यताम्, किं साध्यातावच्छेदकसंबन्धावच्छिन्न साध्याभाव-वृत्तित्वस्य प्रतियोगिताविशेषणत्वेनेतिवाच्यम् । कालिकसम्बन्धावच्छिन्नात्मत्व-प्रकारकप्रमाविशेष्यत्वाभावस्य विशेषणताविशेषेण साध्यत्वे आत्मत्वादि हेतावव्याप्त्यापत्तेः । कालिकसम्बन्धावच्छिन्नसाध्याभावस्य विशेषणता- विशेषसम्बन्धेन योऽभावस्तस्यापि साध्यस्वरूपतया कालिकसंबन्धवद्विशेषणता-विशेषसंबन्धोऽपि साध्यीय प्रतियोगितावच्छेदकसम्बन्धः तेन सम्बन्धेनात्मत्व- प्रकारकप्रमाविशेष्यत्वरूप साध्याभाववत्यात्मनि हेतोरात्मत्वस्यवृत्तेः ।**

माथुरीभास्करी

एवम् = अत्यन्ताभावाभावस्य प्रतियोगिस्वरूपत्वमभ्युपेत्यव्याप्तिलक्षणपरिष्कारे, साध्यसामान्यीयेत्यादि = यावत्साध्यनिरूपितत्वादिरूपं यत्साध्यसामान्यीयप्रतियोगित्वं तदवच्छेदक-सम्बन्धेनैव, साध्याभावाधिकरणत्वम् = निरूक्तसाध्यसामान्याभावाश्रयत्वम्, विवक्ष्यताम् = लक्षणे प्रवेश्यताम्, साध्यतावच्छेदकेत्यादि = साध्यतावच्छेदकसम्बन्धावच्छिन्न साध्यनिष्ठप्रतियोगिताकाभाव-वृत्तित्वविशेषणेन प्रयोजनं नास्तीति भावः ।

अस्यायमाशयः । साध्यसामान्यीय प्रतियोगितावच्छेदक सम्बन्धेन निरूक्तसाध्य-सामान्याभावाधिकरणत्वस्य व्याप्तिलक्षणे प्रवेशादेव वह्निमान् धूमात्, गुणत्ववान् ज्ञानत्वात्, सत्तावान् जातेरित्यादौ लक्षण समन्वयात्सकलदोषवारणसंभवे संबन्धघटक साध्यसामन्यीयप्रतियोगित्वे वृत्तित्वान्तविशेषणं व्यर्थमिति मूले सम्बन्ध कुक्षौ साध्यतावच्छेदकधर्मावच्छिन्नत्व पदं प्रमादादेव सन्निविष्टमिति प्रतीयते । साध्यतावच्छेदकसंवन्धावच्छिन्न साध्याभाववृत्तित्व विशेषणेनैवेति माथुरी पर्यालोचनया, अन्यथा तत्र साध्यतावच्छेदकधर्मावच्छिन्नत्व दलमप्युपात्तमभविष्यत् । किञ्च मथुरानाथेन साध्यतावच्छेदक-धर्मावच्छिन्नत्वस्य स्वयं प्रयोजनाकथनेनापि तद्दलं प्रमादादागतमित्येव बोद्धव्यमिति ।

न चैवमित्यादि ग्रन्थेन कृतायाः आशङ्कायाः निराकरणाय युक्तिंदर्शयति । कालिकसंबन्धावच्छिन्ने-त्यादिना । कालिकसंवन्धावच्छिन्नेत्यादि = कालिकसम्बन्धावच्छिन्ना या आत्मत्वप्रकारक-प्रमाविशेष्यत्वनिष्ठाप्रतियोगिता तन्निरूपकाभावस्य विशेषणताविशेषसम्बन्धेन = स्वरूपसम्बन्धेन, साध्यत्वे= साध्यत्वाभ्युपगमे, आत्मत्वादि हेतौ = आत्मत्वज्ञानेच्छादीनांमध्येऽन्यतमस्य हेतुत्वपक्षे, अव्याप्त्यापत्तेः = अव्याप्ति प्रसङ्गात् । तामेवाव्याप्तिं सङ्गमयति कालिकसंबन्धावच्छिन्नसाध्याभावस्ये-त्यादिना, कालिकेत्यादि = कालिकसम्बन्धावच्छिन्न प्रतियोगिताकात्मत्वप्रकारकप्रमाविशेष्यत्वा-भावात्मक साध्यनिष्ठकालिकसंवन्धावच्छिन्नप्रतियोगिताकाभावस्य, विशेषणताविशेषेण = स्वरूपसम्बन्धेन, योऽभावः= आत्मत्वप्रकारक प्रमाविशेष्यत्वाभावाभावः स्वरूपेणनास्तीत्याकारकः, तस्यापि= साध्याभावस्य स्वरूपेणाभावस्यापि, साध्यस्वरूपतया = तदभावाभावस्य तत्स्वरूपत्वेन साध्या-भावाभावस्य साध्यस्वरूपत्वेनेति भावः, कालिकसंवन्धवत् = साध्याभावस्य कालिकेन योऽभावस्तस्यापि साध्यरूपतया कालिकसम्बन्धो यथा तादृश प्रतियोगितावच्छेदकसंबन्धः तथेत्यर्थः , विशेषणता-विशेषोऽपि = स्वरूपसम्बन्धोऽपि, साध्यीय प्रतियोगितावच्छेदक सम्बन्धः साध्यनिरूपित प्रतियोगितावच्छेदकसम्बन्धः, तथाचास्य साध्यघटकत्वं सेत्स्यतीति भावः , तेन सम्बन्धेन = स्वरूपसंवन्धेन, आत्मत्वप्रकारकेत्यादि = आत्मत्वप्रकारकप्रमाविशेष्यत्वरूपो यः साध्याभावः ,तद्वति आत्मनि, हेतोः = हेतुभूतस्य आत्मत्वस्य वृत्तेः सत्त्वात् ।

अस्यायमाशयः । सम्बन्धप्रविष्टसाध्यसामान्यीयप्रतियोगितायां वृत्तित्वान्त विशेषणस्यानुपादाने साध्यसामन्यीयप्रतियोगितावच्छेदकसम्बन्धेन तादृश साध्याभावस्य यदधिकरणं तन्निरूपितहेतुतावच्छेदक-संबन्धावच्छिन्नवृत्तित्व सामान्याभावो व्याप्तिरिति फलिष्यति। एवंचेत् कालिकसंबन्धावच्छिन्न-प्रतियोगिताकात्मत्वप्रकारकप्रमाविशेष्यत्वाभाववान् आत्मत्वादित्यत्राव्याप्तिः। तथाहि हेत्वधिकरणे आत्मनि नित्येषु कालिकायोगादिति न्यायेन कालिकसंबन्धेन कस्यापि वस्तुनोऽसत्त्वात् कालिकेन प्रमाविशेष्यत्वाभावस्य साध्यतावच्छेदक स्वरूपसंबन्धेन सत्त्वेनास्य सद्धेतुत्वम्। तथा च कालिक-संबन्धावच्छिन्नात्मत्वप्रकारकप्रमाविशेष्यत्वाभावस्य कालिकसंबन्धेन योऽभावः सः साध्याभावस्तस्य स्वरूपसम्बन्धेन योऽभावस्तस्यसाध्यस्वरूपत्वं अस्य साध्याभावाभावत्वात्, तदभावाभावाभावस्य तत्स्वरूपत्वाभ्युपगमात् । तथा चात्रसाध्यीय प्रतियोगितावच्छेदकसंबन्धः स्वरूपसंबन्धोऽपीति स्वरूपसंबन्धेनात्मत्वप्रकारकप्रमाविशेष्यत्वरूप साध्याभावस्याधिकरणमात्मा तत्रात्मत्वरूपहेतोः सत्त्वादव्याप्तिरतस्तद्वारणाय संबन्धवटकसाध्यीयप्रतियोगितायां वृत्तित्वान्तविशेषणं देयं, एवं च साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकसाध्याभाववृत्ति साध्यसामान्यीय प्रतियोगितावच्छेदकसंबन्धो न स्वरूपसम्बन्धः, किन्तु कालिक एव । तथाहि कालिकसंबन्धावच्छिन्नप्रतियोगिताकात्मत्वप्रकारक-प्रमाविशेष्यत्वाभावः साध्यः तस्य स्वरूपेण योऽभावः सएवसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताक-साध्याभावो न तु साध्यस्यकालिकेनाभावः । तथा च साध्याभावस्य कालिकेन योऽभावः स एव साध्यस्वरूपो न तु साध्याभावस्य स्वरूपेणाभावः। उभयोः समस्थले व्यवहाराभावात् । तथाच तादृशसाध्याभाववृत्ति साध्यसामान्यीय प्रतियोगितावच्छेदकसम्बन्धपदेन कालिकस्यैव ग्रहणात् कालिकसंबन्धेनात्मत्वप्रकारक प्रमाविशेष्यत्वात्मकसाध्याभावस्याधिकरणं कालो जन्य पदार्थो नान्य एवेति तत्रात्मत्वरूपहेतोरसत्त्वेन नाव्याप्तिरिति ।

साध्यातावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकसाध्याभाववृत्ति साध्यसामान्यीयप्रतियोगितावच्छेदकसंबन्धेन साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्न-प्रतियोगिताकाभावस्य यदधिकरणं तन्निरूपित हेतुतावच्छेदकसंबन्धावच्छिन्नवृत्तित्वसामान्याभावो व्याप्तिरिति फलितमेवमप्यव्याप्तिः स्यादित्याशङ्क्यसमाधत्ते । प्रतियोगितावच्छेदकवदित्यादिना ।

**माथुरी**

प्रतियोगितावच्छेदकवत्प्रतियोग्यप्यन्योन्याभावाभावः। तेन तादात्म्यसंबन्धेन साध्यतायां साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्याभाववृत्ति साध्यसामान्यीय -प्रतियोगित्वस्य नाप्रसिद्धिः इत्थं चात्यन्ताभावत्वनिरूपितत्वेनापि साध्यसामान्यीय- प्रतियोगिता विशेषणीयाऽन्यथा

घटान्योन्याभाववान् घटत्वत्वादित्यादावव्याप्त्यापत्तेः तादात्म्यसंबन्धस्यापि साध्याभाववृत्ति साध्यसामान्यीयप्रतियोगितावच्छेदकत्वात् ।

**माथुरीभास्करी**

प्रतियोगितावच्छेदकवत् = प्रतियोगितावच्छेदकधर्म इव, प्रतियोग्यपि= प्रतियोगिताश्रयोऽपि, अन्योन्याभावाभावः = भेदात्यन्ताभावः, तेन = अन्योन्याभावात्यन्ताभावस्यप्रतियोगि स्वरूपत्वा-भ्युपगमेन, तादात्मयेन साध्यतायाम् = तादात्मयेन घटादेः साध्यत्वे, एतत्त्वादि सद्धेताविति पूरणीयम् साध्यतावच्छेदकेत्यादि = साध्यतावच्छेदकसंवन्धदावच्छिन्नसाध्यनिष्ठप्रितियोगिताको - योऽभावस्तद्वृत्ति यत्साध्यसामान्यीयप्रतियोगित्वं तस्य, नाप्रसिद्धिः= प्रसिध्यतीति भावः ।

अस्यायमाशयः। तादात्म्यसंवन्धेन घटादिसाध्यक एतत्त्वादिहेतुक सद्धेतु स्थलेऽव्याप्तिः। तथाहि स्वनिष्ठप्रतियोगिता स्वाभावनिरूपितैव भवतीति नैयायिकानां सिद्धान्तः । तथा च प्रकृते साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्याभावः तादात्म्येन घटाभावस्तन्निष्ठ प्रतियोगितायां साध्याभावनिरूपितत्वंन प्रसिध्यति । घटभेदात्मकस्वात्यन्ताभावस्य घटत्वस्वरूपत्वात् घटत्वनिरूपित प्रतियोगिताया घटभेदात्मक साध्याभावे केनाप्यनभ्युपगमात् घटनिरूपित-प्रतियोगिताया एव घटभेदेसर्वैः स्वीकृतत्वात् । तथा चात्र साध्याभाववृत्ति साध्यीय-प्रतियोगित्वाप्रसिध्या तदवच्छेदकसंबन्धस्यापि अप्रसिद्धत्वेन तद्धटितलक्षणाप्रसिध्या-ऽव्याप्तिरतस्तद्वारणायान्योन्याभावात्यन्ताभावस्य न केवलप्रतियोगितावच्छेदकस्वरूपत्वं किन्तु प्रतियोगिस्वरूपत्वमपि स्वीकार्यं । एवं च प्रकृते साध्याभावस्तादात्म्येनघटाभाव-स्तन्निष्ठप्रतियोगितायां साध्यीयत्वं प्रसिध्यति । घटभेदाभावस्य प्रतियोग्यात्मक घटस्वरूपत्वेन साध्यीयत्वरूप तन्निरूपितत्वस्य तत्राव्याहतत्वात् । तथा च निरूक्त साध्याभाववृत्ति साध्यीयप्रतियोगितावच्छेदकसंबन्धः स्वरूपसंबन्धस्तेन घटभेदात्मक साध्याभावाधिकरणे पटादौ हेतोरसत्वान्नाव्याप्तिरिति ।

अन्योन्याभावाभावस्य प्रतियोगिस्वरूपत्वाभ्युपगमेन उक्तस्थले दोषवारणेपि घटान्योन्याभाववान् घटत्वत्वादित्यादि सद्धेतावव्याप्तिरित्याशङ्कय समाधत्ते इत्थञ्चेत्यादिना । इत्थञ्च = अन्योन्याभावात्यन्ताभावस्य, प्रतियोगितावच्छेदक प्रतियोग्युभयस्वरूपत्वाभ्युपगस्या-वश्यकत्वे, अत्यन्ताभावनिरुपितत्वेन = तादात्म्यसंबन्धानवच्छिन्नत्वरूपं यदत्यन्ताभाव-प्रतियोगित्वं तेन, साध्यासामान्यीयप्रतियोगिता = सम्बन्धघटिका या साध्यसामान्यनिरूपित प्रतियोगिता सा, विशेषणीया = तद्विशेषणविशिष्ट साध्यसामान्यीय प्रतियोगितैव संबन्धकुक्षौ निवेश्या नकेवलेति भावः। अत्यन्ताभावनिरूपितत्वविशेषणस्य साध्यसामान्यीयप्रतियोगिता-यामनिवेशेदोषमाहान्यथेत्यादिना । अन्यथा= सम्बन्धघटक साध्यसामान्यीयप्रतियोगिताया-

मत्यन्ताभावत्वनिरूपितत्वविशेषणानुपादाने, घटान्योन्याभाववान् = घटभेदवान्, घटत्वत्वात्= घटत्वत्वहेतुकस्थले, आदिपदेन पटान्योन्याभाववान् पटत्वत्वादित्यादि स्थलमपिग्राह्यम्, अव्याप्त्यापत्तेः = अव्याप्तिदोषप्रसङ्गात्, अव्याप्तिमेव उपपादयति । साध्याभावेत्यादिना । साध्याभावेति= निरूक्तसाध्याभाववृत्तिर्या प्रतियोगिता तदवच्छेदकत्वस्य तादात्म्यसंबन्धे सत्त्वादिति भावः ।

अस्यायमाशयः। तादात्म्यसंबन्धेन घटादिसाध्यक सद्धेतावव्याप्तिवारणाय घटाद्यन्योन्याभावाभावो घटाद्यात्मक प्रतियोगि स्वरूप एवेत्युक्तम् । एवञ्च घटान्योन्याभाववान् घटत्वत्वादित्यदिसंद्धेतुस्थलेऽव्याप्तिः स्यात् । तथाहि अत्र साध्याभावो घटान्योन्याभावाभावः घटस्वरूपो घटत्वस्वरूपश्च तथा चैतद्वृत्ति साध्यासामान्यीय प्रतियोगितावच्छेदकसंबन्धोऽपि तादात्म्यः समवायश्च, एवञ्च घटत्वात्मक साध्याभावस्य तादात्म्यसंबन्धेनाधिकरणे संबन्धिनि- वा घटत्वे घटत्वत्वरूपहेतोः सत्त्वात् अव्याप्तिः । अतस्तद्धारणाय संबन्धघटकसाध्यसामान्यीय प्रतियोगितायामत्यन्ताभावनिरूपितत्वविशेषणं देयम् , एवंचात्यन्ताभावनिरूपितत्वं तादात्म्यसंबन्धा-नवच्छिन्नत्वम् । तथाच साध्याभाववृत्ति साध्यीयप्रतियोगितापदेन घटात्मकसाध्याभाववृत्ति प्रतियोगिताग्रहीतुं न शक्यते , अस्याः प्रतियोगितायास्तादात्म्यसंबन्धावच्छिन्नत्वात् किन्तु घटात्वात्मक साध्याभाववृत्ति समवायसंबन्धावच्छिन्नप्रतियोगितैव ग्राह्या, तदवच्छेदकसंबन्ध स्समवाय एव तेन संबन्धेन साध्याभावस्य घटत्वस्य घटस्यवाधिकरणे घटे घटावयवे च घटत्वत्वरूप हेतोरसत्त्वान्नाव्याप्तिरिति ।

घटान्योन्याभाववान् पटत्वादित्यादौ साध्याभाववृत्ति साध्यसामन्यीयप्रतियोगित्वा-प्रसिद्ध्यादिना प्रदर्शितमव्याप्तिदोषं प्रकारान्तरेण वारयति यद्वेत्यादिना ।

**माथुरी**

**यद्वा साध्यतावच्छेदकसंबन्धावच्छिन्न साध्याभाववृत्ति साध्यसामान्यीय निरूक्तप्रतियोगित्व तदवच्छेदकत्वान्यतरावच्छेदकसंबन्धेनैव साध्याभावा -धिकरणत्वं विवक्षणीयम् । वृत्त्यन्तमन्यतरविशेषणम् । एवञ्च घटान्योन्या-भाववान् पटत्वादित्यादौ, साध्याभावस्य घटत्वादेः साध्यीय प्रतियोगित्व विरहेऽपि न क्षतिः, तादृशान्यतरस्य साध्यीयप्रतियोगितावच्छेदकत्वस्यैव तत्रसत्त्वात् ।**

**माथुरीभास्करी**

साध्यतावच्छेदकेत्यादि = साध्यतावच्छेदकसम्वन्धावच्छिन्नप्रतियोगिताकसाध्याभाववृत्ति यत् साध्यसामन्यीय स्वरूपं निरूक्तं, प्रतियोगित्वम्= अत्यन्ताभावत्वनिरूपित प्रतियोगित्वम्, तदवच्छेदकत्वम् = साध्यीय तादृशप्रतियोगितावच्छेदकत्वम्, तादृश प्रतियोगित्वं तदवच्छेदकत्वं चेति प्रथमंद्वन्द्वः ततस्तयोर्यदन्यतरत् इति तत्पुरुषः, तदवच्छेदकत्व संवन्धेनैव,

साध्याभावाधिकरणत्वम् = तादृश साध्यसामन्याभावाधिकरणत्वम्, (लक्षणवाक्यघटक साध्यभावाधिकरणत्वम्) विवक्षणीयम् = लक्षणवाक्यघटक साध्याभावाधिकरणत्वपदेन वोधनीयम्, वृत्त्यन्तम् = साध्यतावच्छेदकसंवन्धावच्छिन्नसाध्याभाववृत्तीति दलम्, अन्यतरविशेषणम्= तादृशसाध्याभाववृत्ति साध्यसामन्यीयप्रतियोगित्व, तदवच्छेदकत्वैतदन्यतरविशेषणम्, एवञ्च= तादृश वृत्तित्वस्यान्यतरविशेषणत्वे, इत्यादौ = घटान्योन्याभाववान् पटत्वादित्यादि सद्धेतुस्थले, साध्याभावस्य = साध्याभावात्मकस्य, घटत्वादेः = प्रतियोगितावच्छेदकीभूतघटत्वादेः, साध्यीयप्रतियोगित्वविरहेऽपि = साध्यसामान्यनिरुपितप्रतियोगित्वाभावेऽपि, न क्षतिः = नाव्याप्तिः, तादृशान्यतरस्य= साध्याभाववृत्ति साध्यसामान्यीयप्रतियोगित्व तदन्यतरावच्छेदक-त्वैतदन्यतरात्मकस्य, साध्यीयप्रतियोगितावच्छेदकत्वस्यैव = साध्यनिरुपिता या प्रतियोगिता तदवच्छेदकत्वस्यैव, तत्र = साध्याभावात्मकघटत्वादौ, सत्त्वात् = वर्तमानत्वात्।

अस्यायमाशयः । घटान्योन्याभावाभावाभावस्य घटभेदात्मकत्वमनङ्गीकृत्य घटत्वा-त्यन्ताभावस्वरूपत्वमेव स्वीकुर्वतां मतेऽपि घटान्योन्याभाववान् पटत्वादित्यादौ नाव्याप्तिरस्मिन् कल्पे । तथाहि । साध्यतावच्छेदकसंवन्धावच्छिन्नसाध्याभाववृत्ति यत् साध्यीय प्रतियोगित्वं तदवच्छेदकत्वं वा प्रसिद्ध्यति, तदवच्छेदकत्वसंवन्धेनैव साध्याभावाधिकरणत्वं लक्षणे निवेशनीयमिति फलितम्। तथा च प्रकृते साध्याभावः घटान्योन्याभावाभावः घटत्वस्वरूपः । तत्र घटभेदात्मक साध्यनिरूपित प्रतियोगित्वस्यासत्त्वेपि साध्यीभूत घटभेदनिरूपित प्रतियोगितावच्छेदकत्वस्य सत्त्वात् तदवच्छेदक समवायसम्वन्धेन घटत्वात्मक साध्याभावाधिकरणे घटे पटत्वस्यासत्त्वात् ।

नन्वेतावता साध्यतावच्छेदकसंबन्धावच्छिन्न साध्याभाववृत्ति साध्यसामान्यीया-त्यन्ताभावत्वनिरूपितप्रतियोगित्वस्य तदवच्छेदकत्वस्य वा योऽवच्छेदकसंबन्धस्तेन तादृश साध्य-सामान्याभावस्य यदधिकरणं तन्निरूपित हेतुतावच्छेदकसंबन्धावच्छिन्नवृत्तित्वसामान्या-भावोव्याप्तिरिति फलितम् ,एवमपि कपिसंयोगादि साध्यक सद्धेतावव्याप्तिः स्यादित्याशङ्क्य विशेषणान्तरं प्रवेश्य समाधत्ते नचेत्यादिना ।

### माथुरी

न च तथापि कपिसंयोगी एतद्वृक्षत्वादित्याद्यव्याप्यवृत्ति साध्यक सद्धेता-वव्याप्तिरिति वाच्यम् । निरूक्त साध्याभावत्वविशिष्टनिरूपिता या निरूक्तसंसर्गक निरवच्छिन्नधिकरणता तदाश्रयावृत्तित्वस्य विवक्षितत्वात् । गुणकर्मान्यत्वविशिष्ट-सत्त्वाभाववान् गुणत्वादित्यादौ सत्त्वात्मक साध्याभावाधिकरणत्वस्य गुणादि- वृत्तित्वेऽपि साध्याभावत्वविशिष्टनिरुपिताधिकरणत्वस्य गुणाद्यवृत्तित्वान्नाव्याप्तिः ।

धुरीभास्करी

तथापि = पूर्वोक्तरीत्यालक्षणे परिष्कृतेऽपि, कपीत्यादि = कपिसंयोगयेतद्वृक्षत्वादित्यादि ऽव्याप्यवृत्तिसाध्यकसद्धेतुस्तत्र ।

अस्यायमाशयः । अत्र तादृश साध्याभाववृत्ति साध्यीयप्रतियोगितावच्छेदकसम्बन्धः स्वरूप एव वसाध्यकत्वात् । तथाचस्वरूपसंबन्धेन कपिसंयोगाभावात्मकसाध्याभावस्याधिकरणं एतद्वृक्षोऽपि े कपिसंयोगस्यासत्त्वात्तथाचैतद्वृक्षे हेतोः एतद्वृक्षत्वस्यसत्त्वादव्याप्तिः स्यादिति।

नचैवमित्यादिना प्रदर्शितां शङ्कां निरसितुंयुक्तिंदर्शयति, निरूक्तसाध्याभावेत्यादिना । रूक्तेत्यादि = साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकधर्ममात्रावच्छिन्नप्रतियोगिताक- ध्याभावत्वावच्छिन्नाधेयतानिरूपिता या, निरूक्तसंसर्गकेत्यादि = साध्यतावच्छेदकसंबन्धावच्छिन्न ध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकसंसर्गकनिरवच्छिन्नाधिकरणता, ाश्रयवृत्तित्वस्य = तादृशाधिकरणताश्रयनिरूपितहेतुतावच्छेदकसंबन्धावच्छिन्नवृत्तित्व सामान्याभावस्य, वक्षितत्वात् = साध्याभाववदवृत्तित्वपदेनाभिधानात् ।

अस्यायमाशयः । साध्याभाववृत्ति साध्यसामान्यीयप्रतियोगितावच्छेदकसंबन्धेन केवलं तादृश ध्याभावाधिकरणनिरूपितवृत्तित्वाभावो व्याप्तिरिति नोच्यते । किन्तु तादृशसंबन्धेन तादृश ध्याभावत्वावच्छिन्नाधेयतानिरूपिता या निरवच्छिन्नाधिकरणता तदाश्रयनिरूपित हेतुतावच्छेदक न्धावच्छिन्नवृत्तित्वसामान्याभाव एव व्याप्तिरित्युच्यते । एवञ्च कपिसंयोग्येतत्वादित्यादौ ाप्तिः । कपिसंयोगाभावात्मकसाध्याभावत्वावच्छिन्नाधेयतानिरूपित निरवच्छिन्नाधिकरणताया धिकरण वृक्षादावसत्त्वात् गुणादावेवसत्त्वात्तत्र हेतोः अपि असत्त्वाच्च ।

ननु तादृशसंबन्धेन तादृशसाध्याभाववृत्त्याधेयतानिरूपितनिरवच्छिन्नाधिकरणतायाः ो निवेशनेनैवोक्तस्थलेऽव्याप्तिवारणसंभवे तादृश साध्याभावत्वावच्छिन्नत्वस्या- धेयतायां निवेशो व्यर्थ ाशङ्कां निराकरोति गुणकर्मान्यत्वेत्यादिना । गुणकर्मान्यत्वेत्यादि= गुणकर्मान्यत्वविशिष्टं यत्सत्त्वं योऽभावस्तद्वान्, गुणत्वादित्यादौ= गुणत्वादित्यादि हेतौ, सत्त्वात्मकेति= केवलसत्त्वात्मको साध्याभावस्तदधिकरणत्वस्य, गुणादिवृत्तित्वेऽपि = हेत्वाधिकरणीभूतगुणे सत्त्वेऽपि, भावत्वेत्यादि = साध्याभावत्वावच्छिन्नाधेयता-निरूपिताधिकरणत्वस्य, गुणादावसत्त्वात् = करण गुणादाववृत्तित्वेन, नाव्याप्तिः = अव्याप्तिः न भवतीति भावः ।

अस्यायमाशयः। व्याप्तिलक्षणे साध्याभावत्वावच्छिन्नाधेयतानिरूपिताधिकरणतायानिवेशस्य ावनिष्ठाधेयतानिरूपिताधिकरणताया निवेशे गुणकर्मान्यत्वविशिष्टसत्त्वाभाववान्

गुणत्वादित्यत्राव्याप्तिः । अत्र साध्याभावो गुणकर्मान्यत्वविशिष्टसत्त्वाभावाभावः स च गुणकर्मान्यत्वविशिष्टसत्तास्वरूपः । तथा च विशिष्टं शुद्धात् नातिरिच्यतेति केवलसत्तायाः अपि साध्याभावस्वरूपत्वात् तन्निष्ठाधेयतानिरूपितपदेन धर्तुं शक्यत्वात् तदाश्रये गुणादौ हेतोः सत्त्वेन तन्निरूपितवृत्तित्वाभावस्य हेतावसत्त्वात् । तन्निवेशे तु साध्याभावत्वावच्छिन्नाधेयतानिरूपिताधिकरणतापदेनगुणकर्मान्यत्वविशिष्टसत्ताभावाभावत्वावच्छिन्नाधेयतानिरूपिताधिकरणताया एव धर्तव्यतया तस्याः द्रव्यएव सत्त्वात् तत्र गुणत्व हेतोरसत्वान्नाव्याप्तिरिति ।

साध्याभावत्वावच्छिन्नाधेयतानिरूपिताधिकरणताया लक्षणे निवेशेऽपि अव्याप्ति दोषमाशङ्क्य समाधत्ते नचैवमित्यादिना ।

**माथुरी**

**नचैवं कपिसंयोगाभाववान् सत्त्वादित्यादौ निरवच्छिन्न साध्याभावाधिकरणत्वाप्रसिद्ध्याऽव्याप्तिरितिवाच्यम् । केवलन्वायिन्यभावादित्यनेन ग्रन्थकृतैवास्यदोषस्य वक्ष्यमाणत्वात् ।**

**माथुरीभास्करी**

एवम् = साध्याभावत्वावच्छिन्नाधेयतानिरूपितनिरवच्छिन्नाधिकरणताया लक्षणेनिवेशे, कपिसंयोगाभाववान् सत्त्वादित्यादौ = कपिसंयोगावभावसाध्यक सत्त्वादि सद्धेतौ, निरवच्छिन्नेत्यादि= निरवच्छिन्नं यत्साध्याभावाधिकरणत्वं तस्य, अप्रसिद्ध्या = प्रमाविषयत्वाभावेन ।

अस्यायमाशयः । कसिंयोगाभाववान् सत्त्वादित्यत्र साध्याभावः कपिसंयोगाभावाभावः कपिसंयोगस्वरूपः, तस्य किञ्चिदवच्छेदेनैव वृत्तितया, निरवच्छिन्नाधिकरणत्वस्याप्रसिद्धत्वेन तद्धटक लक्षणस्याप्यप्रसिद्धत्वादव्याप्तिः स्यादिति । नचैवमित्यादिना दर्शितां शङ्कां इष्टापत्त्या निराकरोति केवलान्वयिनीत्यादिना । केवलान्वयिनीति = केवलान्वयिन्यभावादितिग्रन्थेन, ग्रन्थकृतैव= मणिकारेणैव, अस्य दोषस्य= कपिसंयोगाभाववान् सत्त्वादित्यादि स्थलेऽव्याप्तिदोषस्य ।

अस्यायमाशयः । केवलान्वयिसाध्यकस्थले पञ्चानां लक्षणनामप्यव्याप्तिदोषं ग्रन्थकारः स्वयमेव दर्शयिष्यत्यतस्तत्रदोषस्येष्टत्वादधुनातस्य प्रदर्शनं नोचितमिति ।

केवलान्वयिभिन्न साध्यकस्थलेऽपि निरवच्छिन्नसाध्याभावाधिकरणत्वाप्रसिद्ध्याऽव्याप्तिः स्यादिति पुनराशङ्क्य समाधत्ते न च तथापीत्यादिना ।

**माथुरी**

नच तथापि कपिसंयोगिभिन्नं गुणत्वादित्यादौ निरवच्छिन्न साध्याभावाधिकरणत्वाप्रसिद्ध्याऽव्याप्तिः। अन्योन्याभावस्य व्याप्यवृत्तित्व नियमवादिनये तस्य केवलान्वयिन्यनन्तर्गतत्वादिति वाच्यम्, अन्योन्याभावस्य व्याप्यवृत्तितावदिनियमनये अन्योन्याभावान्तरात्यन्ताभावस्य प्रतियोगितावच्छेदक-स्वरूपत्वेऽप्यव्यप्यवृत्तिमदन्योन्याभावाभावस्य व्याप्यवृत्तिस्वरूपस्या - तिरिक्तस्याभ्युपगमात्। तच्चाग्रे स्फुटीभविष्यति।

**माथुरीभास्करी**

तथापि = कपिसंयोगाभाववान् सत्त्वादित्यादौ दोषस्यानिवारणीयत्वेऽपि, कपिसंयोगि-भिन्नं गुणत्वादित्यादौ = कपिसंयोगिभेदसाध्यक गुणत्वादि सद्धेतौ, निरवच्छिन्नेत्यादि = निरवच्छिन्नं यत्साध्याभावाधिकरणत्वं तस्य,अप्रसिध्या=क्वाप्यसत्वेन,ननु कपिसंयोगिभेदोऽपि केवलान्वयीति पूर्वोक्तरीत्यावारणं स्यादित्यत आहान्योन्याभावस्येत्यादि, अन्योन्याभावस्य = भेदस्य, व्याप्यवृत्तित्ववादिनये= व्याप्यवृत्त्येवेतिवदतांमते, तस्य =अन्योन्याभावस्य, केवलान्वयिनि = अत्यन्ताभावाप्रतियोगिस्वरूपवस्तुषु,अनन्तर्गतत्वात् = अप्रविष्टत्वात्।

अस्यायमाशयः। अत्यन्ताभावएवाव्याप्यवृत्तिर्नतु भेद इति वदतां मते कपिसंयोगिभेदो न केवलान्वयी कपिसंयोगिभेदाभावस्य वृक्षादावेवसत्त्वेनाभावप्रतियोगित्वस्यैव कपिसंयोगिभेदे सत्त्वेन तदभावस्यासत्वात्। तथा च तत्राऽव्याप्तिः। तथाहि, साध्याभावः कपिसंयोगिभेदाभावः, कपिसंयोगि भेदाभावः कपिसंयोगस्वरूपस्तथाचास्य निरवच्छिन्नाधिकरणता नास्त्येव। किञ्चिदवच्छेदेनैव सर्वत्र वर्तमानत्वात्। एवं च निरवच्छिन्नाधिकरणताघटित लक्षणस्याऽप्रसिद्धत्वादव्याप्तिरिति।

न च तथापित्यादिनोक्तमव्याप्तिदोषं परिहर्तुं युक्तिंदर्शयत्यन्योन्याभावस्येत्यादिना। अन्योन्याभावस्य = भेदस्य,व्याप्यवृत्तितावदिनियमनये =व्याप्यवृत्तिस्वरूप एवेति स्वीकुर्वतां मते, अन्योन्याभावेत्यादि , अन्योन्याभावान्तरात्यन्ताभावस्य = व्याप्यवृत्तिमदन्योन्याभावस्य योऽत्यन्ताभावस्तस्य,प्रतियोगितावच्छेदकस्वरूपत्वेऽपि=प्रतियोगितावच्छेदकस्वरूपत्वाभ्युपगमेऽपि, अव्याप्यवृत्तिमदन्योन्याभावाभावस्य= अव्याप्यवृत्तिमान् यस्तदीयभेदाभावस्य, व्याप्यवृत्ति- स्वरुपस्य = व्याप्यवृत्यात्मकस्य, अतिरिक्तस्य = प्रतियोगिप्रतियोगितावच्छेदकानात्मकस्य सप्तमपदार्थस्य, अभ्युपगमात् = स्वीकारात्।

अस्यायमाशयः । येषां मते भेदोऽव्याप्यवृत्तीत्येव स्वीक्रियते तेषां मते अव्याप्यवृत्तिमतो भेदभावस्य व्याप्यवृत्तित्वं सप्तमपदार्थस्वरूपत्वं च स्वीक्रियते । तथा च कपिसंयोगिभिन्नं-गुणत्वादित्यादौ कपिसंयोगिभेदाभावरूपसाध्याभावस्याव्याप्यवृत्तिमद्भेदाभावत्वेन व्याप्यवृत्तित्वात् सप्तमपदार्थस्वरूपत्वाच्च तस्य निरवच्छिन्नाधिकरणत्वं द्रव्ये एव प्रसिध्यतीति तत्र गुणत्वरूप-हेतोरसत्वान्नाव्याप्तिरिति । तच्च = अव्याप्यवृत्तिमद् भेदाभावस्य व्याप्यवृत्तित्वस्वरूपमेव स्वीकार्यमिति, अग्रे = चतुर्थलक्षणे, स्फुटीभविष्यति = स्पष्टीकरिष्यति ग्रन्थकार इति भावः ।

साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नसाध्याभाववृत्तिसाध्यसामन्यीय प्रतियोगितावच्छेदकसंबन्धावच्छिन्ना या साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदक धर्ममात्रावच्छिन्नसाध्याभावत्वावच्छिन्ना आधेयता, तन्निरूपित निरवच्छिन्नाधिकरणताश्रय निरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वसामान्याभावो व्याप्तिः इति फलितम्। एवमपि वह्निमान् गगनादित्यादावतिव्याप्तिं, द्रव्यं विशिष्टसत्त्वात्, सत्तावान् जातेरित्यादावव्याप्तिञ्च प्रदर्श्य निराकरोति ननु तथापीत्यादिना ।

**माथुरी**

ननु तथापि समवायादिना गगनादिहेतुके इदं वह्निमद् गगनादित्यादा- वतिव्याप्तिः । वह्न्यभाववति हेतुतावच्छेदकसमवायादिसंबन्धेन गगनादेरवृत्तेः, न च तल्लक्ष्यमेव,हेतुतावच्छेदकसंबन्धेन पक्षधर्मत्वाभावाच्च असद्धेतुत्वव्यवहार- इति वाच्यम्, तत्रापि व्याप्तिभ्रमेणैवानुमितेरनुभवसिद्धत्वात्। अन्यथा धूमवान् वह्नेरित्यादेरपि लक्ष्यत्वस्य सुवचत्वात्।

एवं द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादावव्याप्तिः । विशिष्टसत्त्वस्य केवलसत्त्वानतिरेकतया द्रव्यत्वाभाववत्यपि गुणादौ तस्य वृत्तेः, गुणे गुण-कर्मान्यत्वविशिष्टसत्तेति प्रतीतेः सर्व सिद्धत्वात्। सत्तावान् द्रव्यत्वादित्यादाव-व्याप्तिश्च । सत्ताभाववति सामान्यादौ हेतुतावच्छेदक समवाय संबन्धेनवृत्ते- रप्रसिद्धेरितिचेन्न । हेतुतावच्छेदकावच्छिन्न हेत्वधिकरणताप्रतियोगिक हेतुतावच्छेदकसंबन्धावच्छिन्नाधेयतानिरूपित विशेषणताविशेषसंबन्धेन निरुक्तसाध्याभावत्वविशिष्टनिरूपित निरूक्तसम्बन्धसंसर्गकनिरवच्छिन्ना - धिकरणताश्रयवृत्तित्वसामान्याभावस्य विवक्षितत्वात्। वृत्तित्वञ्च न हेतुतावच्छेदक संबन्धेन विवक्षणीयम् । अस्ति च सत्तावान् द्रव्यत्वादित्यादौ सत्ताभावाधिकरणता-श्रयवृत्तित्वस्य हेतुतावच्छेदकसमवायसंबन्धावच्छिन्नाधेयतानिरूपित विशेषणता-विशेषसंबन्धेन सामान्याभावो

द्रव्यत्वादौ, समवायावच्छिन्नाधेयतानिरूपित विशेषणताविशेषसंबन्धावच्छिन्नप्रतियोगिताकसत्ताभावाधिकरणत्वाश्रय- वृत्तित्वाभावस्य व्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकाभावतया, संयोग-संबन्धावच्छिन्नगुणाभावादेरिव केवलान्वयित्वात् । द्रव्यं सत्तादित्यादौ च द्रव्यत्वाभावाधिकरण गुणादिवृत्तित्वस्यैव समवायसंबन्धावच्छिन्नाधेयता प्रतियोगिक विशेषणताविशेषसंबन्धेन सत्तायां सत्त्वान्नातिव्याप्तिः, द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्तिवारणाय प्रतियोगिकान्तमाधेयताविशेषणम्।

**माथुरीभास्करी**

तथापि = पूर्वोक्तरीत्या परिष्कृतलक्षणे उक्तस्थलेषु दोषाभावेऽपि, समवायादिना = समवायसंयोगस्वरूपाद्यन्यतमसंबन्धैः, गगनादिहेतुके = आकाशात्माद्यवृत्तिपदार्थहेतुके, इदं वह्निमदित्यादौ = इदं वह्निमदित्यादि शब्दप्रयोगस्थले, अतिव्याप्तिः = अतिव्याप्तिदोषप्रसङ्गः । कथमतिव्याप्तिः स्यादिति अतः तत्र हेतुं दर्शयति, वह्न्यभाववतीत्यादिना । वह्न्यभाववति = वह्न्यभावात्मक साध्याभाववति, हेतुतावच्छेदकेति = हेतुतावच्छेदकीभूतो यः समवायादि सम्बन्धस्तेन, गगनादेः = आकाशाद्यात्मक हेतोः, अवृत्तेः = असत्त्वात्।

अस्यायमाशयः। अत्र साध्यं वह्निः साध्याभावो वह्न्यभावस्तदधिकरणं जलह्रदादिस्तत्र गगनात्मकहेतुर्नास्ति । गगनादीनां समवायादिना कुत्राप्यसत्त्वादतः साध्याभावाधिकरण-निरूपितवृत्तित्वाभावस्य गगने सत्त्वेनातिव्याप्तिरिति ।

वह्निमत् गगनादित्यत्रातिव्याप्ति र्नस्यादेवेति कस्यचिन्मतमुपन्यस्य निषेधति नचेत्यादिना । तत् = वह्निमद् गगनादित्यादि स्थलम्, लक्ष्यमेव = अव्यभिचरितत्वलक्षणस्य यानि लक्ष्यानि तत्र प्रविष्टमेव, पक्षेति = पक्षे हेतोरसत्वेन ।

अस्यायमाशयः । अव्यभिचरितत्वस्यैवेदं लक्षणं न तु सद्धेतोः, अव्यभिचरितत्वं च व्याभिचारशून्यत्वमेवं च साध्याभाववद्वृत्तित्वात्मकव्यभिचारस्य गगनादावसत्त्वात् गगनेऽपि तादृशाव्यभिचरितत्वस्य सत्त्वेन तस्य लक्ष्यत्वसंभवात्तत्रातिव्याप्तिदोषप्रदर्शमनुचितमिति ।

नचेत्यादिनाकृतमाक्षेपं निराकर्तुं युक्तिंदर्शयति तत्रापीत्यादिना, तत्रापि= इदं वह्निमद् गगनादित्यादि स्थलेऽपि व्याप्तिभ्रमेणैव=व्यप्ति प्रकारको यो हेतुविशेष्यको भ्रमात्मक परामर्शः तेनैव, अनुमितेः = इदं वह्निमदित्याद्यनुमितेः, अनुभवसिद्धत्वात् = प्रामाणिकैरनुभूयमानत्वात्, अन्यथा= व्याप्तिभ्रमेणोत्पद्यमानानुमितिहेतोरपि व्याप्तिलक्षणलक्ष्यत्वप्रतिपादने, धूमवान् वह्नेरित्यादेरपि= एतत्स्थलीयहेतोरपि, लक्ष्यत्वस्य = व्याप्तिलक्षण लक्ष्यत्वस्य, सुवचत्वात् = वक्तुं शक्यत्वात् ।

अस्यायमाशयः । अव्यभिचरितत्वपदस्य व्यभिचारशून्यत्वात्मकमर्थमादाय वह्निमद् गगनादित्यादि स्थलीय गगनादिहेतोर्व्याप्तिलक्षणलक्ष्यत्वाभ्युपगमे, साध्याभाववदवृत्तित्व-मित्यत्रावृत्तित्वपदस्य सामान्याभावार्थकत्वमस्वीकृत्य यथाश्रुतार्थग्रहणे साध्याभाववदवृत्तित्वरूपा-व्यभिचरितत्वस्य धूमवान् वह्नेरित्यादि स्थलीय वह्नि हेतावपि सत्त्वेन वह्नेरपि लक्ष्यत्वापत्तिरतो गगनादीनामपि लक्ष्यत्वं वक्तुं न शक्यत इति तत्रातिव्याप्तिकथनं उचितमेवेति ।

उक्तलक्षणस्यातिव्याप्तिदोषमभिधायाव्याप्तिदोषमपि कथयत्येवमित्यादिना । एवम्= अतिव्याप्तिरिव, द्रव्यमित्यादि = समवायेन निरवच्छिन्नद्रव्यत्वसाध्यक गुणकर्मभिन्नत्व-विशिष्टसत्ताहेतुकस्थले, अव्याप्तिः= अव्याप्तिदोषो भवतीति भावः । तत्र अव्याप्ति मेव सङ्गमयति विशिष्टस्येत्यादिना, विशिष्टसत्त्वस्य= गुणकर्मान्यत्वविशिष्टसत्त्वस्य, केवलसत्त्वानतिरेकितया= विशिष्टं शुद्धात् नातिरिच्यत इति न्यान्येन शुद्धसत्त्वाभिन्नत्वात्, द्रव्यत्वाभाववत्यपि= साध्याभावात्मको -यो द्रव्यत्वाभावस्तदधिकरणेऽपि, गुणादौ= गुणे कर्मणि च, तस्य = विशिष्टसत्त्वात्मकहेतोः, वृत्तेः= सत्त्वात् ननु विशिष्टस्य शुद्धाभिन्नत्वेऽपि गुणादौ विशिष्टसत्त्वस्य सत्त्वाभ्युपगमे प्रमाणं नास्तीत्यत आह गुण इत्यादिना, इति प्रतीतेः= गुणे गुणकर्मान्यत्वविशिष्टसत्तेत्याकारका-नुभवस्य, सर्वसिद्धत्वात्= प्रामाणिकैः सर्वैरभ्युपगमात् ।

अस्यायमाशयः । उक्तलक्षणे वह्निमद् गगनादित्यादौ यथाऽतिव्याप्तिदोषस्तथा द्रव्यं विशिष्टसत्त्वादित्यत्राव्याप्तिदोषोऽपि । तथाहि, विशिष्टं शुद्धान्नातिरिच्यत इति न्यायेन सामानाधिकरण्यसंबन्धेन गुणकर्मान्यत्वविशिष्टसत्त्वमपि शुद्धसत्ताजातितोऽतिरिक्तं न भवति, तथा च द्रव्यत्वाभावात्मक साध्याभाववति गुणे कर्मणि च शुद्धसत्त्वात्मक विशिष्टसत्त्वरूप-हेतोरपि सत्त्वादेवं च गुणादिनिरूपितवृत्तित्वाभावस्य हेतावसत्वात् । ननु शुद्ध-विशिष्टसत्त्वयोरनतिरेकेऽपि गुणादौ विशिष्टसत्त्वस्य वृत्तौ प्रमाणाभाव इति नाशङ्कनीयम् । गुणे गुणकर्मान्यत्वविशिष्टसत्तेति प्रतीतिवलादेव तत्सिद्धेरिति ।

द्रव्यंविशिष्टसत्त्वादित्यत्राव्याप्तिमभिधाय सत्तावान् द्रव्यत्वादित्यत्राव्याप्तिं दर्शयति । सत्तावानित्यादिना । इत्यादौ = इत्यादि सद्धेतौ, अव्याप्तिः = अव्याप्तिदोषः । अव्याप्तिमेव संगमयति सत्ताभाववतीत्यादिना । सत्ताभाववति= सत्ताभावत्मकसाध्याभाववति, सामान्यादौ= सामन्यसमवायविशेषाभावेषु, हेतुतेत्यादि = हेतुतावच्छेदकीभूतो यः समवायसंवन्धस्तेन, वृत्तेः= आधेयत्वस्य, अप्रसिद्धेः= प्रमाविषयत्वाभावात् ।

अस्यायमाशयः । वह्निमान् धुमादित्यादौ प्रसक्ताव्याप्तिवारणाय साध्याभावाधिकरणनिरूपित-वृत्तित्वं हेतुतावच्छेदकसंवन्धेन ग्राह्यमित्युक्तम्। तथा च यत्र येन संवन्धेन यद्वर्तते तन्निरूपित-तत्संवन्धावच्छिन्नवृत्तित्वं तत्रैवास्तीति नियमः । तथा च प्रकृते सत्ताभावात्मक साध्याभावाधिकरणे -

जात्यादौ हेतुतावच्छेदकसमवायसंबन्धेन कस्यापि वस्तुनः असत्त्वात् तन्निरूपित समवायसंबन्धावच्छिन्नवृत्तित्वस्याप्रसिद्धत्वेन तद्घटितलक्षणस्याप्यप्रसिध्द्या ऽव्याप्तिरिति ।

ननु तथापि समवायादिनेत्यादिग्रन्थेनोक्तान् दोषानुद्धरति इतिचेन्नेत्यादिना । हेतुतावच्छेदकावच्छिन्नेत्यादि = हेतुतावच्छेदकावच्छिन्नहेतोर्याऽधिकरणता तन्निरूपिका या हेतुतावच्छेदकसंबन्धावच्छिन्नाऽऽधेयता तत्प्रतियोगिको, विशेषणताविशेषसंबन्धः = स्वरूप संबन्धः तेन, अस्याग्रिमवृत्तित्वसामान्याभावेनान्वयः । तथा च तत्संबन्धावच्छिन्ना या तादृश वृत्तित्वनिष्ठप्रतियोगिता तन्निरूपकाभाव एव लक्षणमिति भावः । निरुक्त साध्याभावत्वेत्यादि = साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्न साध्यनिष्ठप्रतियोगिताकाभावत्वविशिष्टमेव निरूक्ताभावत्वविशिष्टपदेन ग्राह्यम् । तादृशाभावत्वविशिष्ट निरूपिता या निरुक्तसंसर्गकाधिकरणता = साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नसाध्याभाववृत्ति साध्यसामान्यीयप्रतियोगितावच्छेदकसंसर्गकाधिकरणता, तदाश्रय वृत्तित्व सामान्याभावस्येत्यर्थः, वृत्तित्वं च = तादृशसाध्याभावाधिकरणतानिरूपितवृत्तित्वम्, न हेतुतावच्छेदकसम्बन्धेनविवक्षणीयम् = तत्र हेतुतावच्छेदकसंबन्धावच्छिन्नत्वविशेषणं न देयमिति भावः । सत्तावान् द्रव्यत्वादित्यत्र दोषोद्धाररीतिं दर्शयति, अस्ति चेत्यादिना । सत्ताभावेत्यादि = साध्याभावात्मको यः सत्ताभावस्तदधिकरणताश्रयनिरूपितवृत्तित्वस्य, हतुतावच्छेदकेत्यादि = हेतुतावच्छेदक समवायसंबन्धावच्छिन्ना या आधेयता तत्प्रतियोगिकस्वरूपसंबन्धेन = तत्संबन्धावच्छिन्न प्रतियोगिताक इति फलितार्थः । सामान्याभावः = तादृशवृत्तितात्वमात्रावच्छिन्नप्रतियोगिताकाभावः, द्रव्यत्वादौ = द्रव्यत्वादि हेतौ, तादृशवृत्तित्वसामान्याभावस्य द्रव्यत्वादि हेतौ सत्त्वे युक्तिमाह समवायेत्यादिना, समवायेत्यादि= प्रकृतहेतुतावच्छेदकीभूतो यः समवायसम्बन्धस्तदवच्छिन्नाधेयताप्रतियोगिको यो विशेषणताविशेषसंबन्धस्तदवच्छिन्नप्रतियोगिताको यः सत्ताभावत्मक साध्याभावाधिकरणतानिरूपित वृत्तित्वाभावस्तस्य, व्यधिकरणेति = व्यधिकरणसंबन्धावच्छिन्ना या प्रतियोगिता तन्निरूपकाभावत्वेन, संयोगेति = संयोगसंबन्धावच्छिन्नप्रतियोगिताकगुणाभावस्य संयोगेन गुणोनास्तीत्याकारकस्येव, केवलान्वयित्वात् = सर्वत्र वर्तमानत्वात्, हेतुतावच्छेदकसंबन्धावच्छिन्नाधेयताप्रतियोगिक संबन्धेनेति दलेन सत्तावान् द्रव्यत्वादित्यादावव्याप्तिर्वार्यत इति भावः ।

अव्याप्तिवारणरीतिं प्रदर्श्यातिव्याप्तिवारणरीतिमपि दर्शयति, द्रव्यं सत्त्वादित्यादिना । द्रव्यमित्यादि = द्रव्यत्वसाध्यक सत्त्वादि हेतुके दुष्टहेतौ, द्रव्यत्वेत्यादि = द्रव्यत्वाभावरूपो यः साध्याभावः तदधिकरणं यो गुणादिस्तन्निरूपितवृत्तित्वस्यैव, समवायेत्यादि = समवाय संबन्धावच्छिन्ना या आधेयता तत्प्रतियोगिक स्वरूपसंबन्धेन, सत्तायाम् = सत्तात्मकहेतौ, सत्त्वात्= वर्तमानत्वादतिव्याप्तिः नास्तीतिभावः ।

सम्बन्धकुक्षौप्रविष्टस्य हेतुतावच्छेदकावच्छिन्नहेत्वधकरणताप्रतियोगिकत्वविशेषणस्य फलमाह। द्रव्यं विशिष्टसत्त्वादित्यादिना। द्रव्यमित्यादि = द्रव्यं, विशिष्टसत्त्वादित्यादि सद्धेतौ, प्रतियोगिकान्तम् = हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणताप्रतियोगिकत्वदलम्, आधेयतायां विशेषणमिति भावः।

अस्यायमाशयः। पूर्वोक्तलक्षणे साध्याभावाधिकरणनिरुपितवृत्तितायां यद्धेतुतावच्छेदक संबन्धावच्छिन्नत्वविशेषणमुपात्तं तद्विशेषणमस्मिन् कल्पे न निवेश्यते किञ्च वृत्तित्व सामान्याभावप्रतियोगितावच्छेदकसंबन्धः पूर्वं केवलं स्वरूप एव, अस्मिन् कल्पेतु हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणतानिरुपित हेतुतावच्छेदकसंबन्धावच्छिन्नाधेयताप्रतियोगिकस्वरूप एव, तथा च यत्र स्थले हेत्वधिकरणमेव साध्याभावाधिकरणं भवति तत्र स्थल एवोक्तसंबन्धेन साध्याभावाधिकरणनिरुपितवृत्तित्वं हेतौ तिष्ठति इति कापिदुष्टहेतौ नातिव्याप्तिः।

सद्धेतु स्थले तु हेत्वधिकरणं कदापि साध्याभावाधिकरणं न भवत्यतः तादृश संबन्धेन साध्याभावाधिकरणनिरूपितवृत्तित्वं कुत्रापि नास्तीति तदभावः सर्वत्र वर्तत इति कारणात् हेतावप्यस्तीति नाव्याप्तिः कचिदपि सद्धेतौ। किञ्च यत्प्रतियोगिको यस्संबन्धस्तेन संबन्धेन सः कापि तिष्ठतीति नियमः। यथा घटप्रतियोगिकसंयोगादि संबन्धेन घट एव तिष्ठति नान्यः कोऽपि पदार्थः। अत एवायं संबन्धः सद्धेतुस्थले साध्याभावाधिकरणनिरुपितवृत्तित्वस्य न संबन्धोऽत एवानेन संबन्धेन सद्धेतु स्थले साध्याभावाधिकरणनिरुपितवृत्तित्वं कापि नास्तीत्युक्तमस्माभिः। तथा च वह्निमान् गगनादित्यादौ हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणत्वस्यैवाप्रसिध्या तद्घटित संबन्धस्याप्रसिद्धत्वात् तत्संबन्धघटित व्याप्तिलक्षणस्याप्यप्रसिद्धत्वान्नातिव्याप्तिः। द्रव्यं विशिष्टसत्त्वादित्यत्र हेतुतावच्छेदक समवायसंबन्धेन गुणकर्मान्यत्ववैशिष्टचसत्त्वात्वो भयात्मक हेतुतावच्छेदकावच्छिन्नाधिकरणं द्रव्यमेव, द्रव्यत्वाभावात्मकसाध्याभावाधिकरणन्तु द्रव्यभिन्नं गुणादिकमतो हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणतानिरुपित समवायसंबन्धावच्छिन्नाधेयताप्रतियोगिकस्वरूपसंबन्धेन द्रव्यनिरुपितवृत्तित्वस्यैव गुणादौ सत्त्वात् साध्याभावाधिकरणीभूत गुणादिनिरुपितवृत्तित्वस्य कुत्राप्यसत्त्वेन हेतावप्यसत्त्वान्नव्याप्तिः। तथा सत्तावान् द्रव्यत्वादित्यादावपि, हेत्वधिकरणं द्रव्यमेव, साध्याभावाधिकरणं द्रव्यगुणकर्मातिरिक्तमतस्तादृशहेत्वधिकरणतानिरुपित हेतुतावच्छेदक समवायसंबन्धावच्छिन्नाधेयताप्रतियोगिकस्वरूपसंबन्धेन साध्याभावाधिकरण जात्यादिनिरुपितवृत्तित्वस्य कुत्राप्यसत्त्वेन हेतुभूत द्रव्यत्वेप्यसत्त्वान्नाव्याप्तिः। द्रव्यं सत्त्वादिति दुष्टहेतु स्थलेतु, हेत्वधिकरणं साध्याभावाधिकरणं च गुणादिरेवेति गुणाद्यात्मकहेत्वधिकरणतानिरुपित-हेतुतावच्छेदक समवायसंबन्धावच्छिन्नाधेयताप्रतियोगिकस्वरूपसंबन्धेन साध्याभावाधिकरण गुणादिनिरुपित वृत्तित्वस्य हेतुभूत सत्तायामेव सत्त्वेन तदभावस्यासत्त्वान्नातिव्याप्तिः। वृत्तित्वस्याधेयत्वस्याभिन्नत्वादिति।

वह्निमान् गगनात्, द्रव्यं विशिष्टसत्त्वादित्यादि स्थलेषु दोषवारणाय हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणतानिरुपितत्वविशेषणं संबन्धनिविष्टमिति कथितं, साम्प्रतं तद्विशेषणं नोपादेयमेव, प्रकारान्तरेणैव तत्रदोषवारणं स्यादिति ब्रूते वस्तुतस्त्वित्यादिना ।

**माथुरी**

वस्तुतस्तु एतल्लक्षणकर्तृमते विशिष्टसत्त्वं विशिष्टनिरुपिताधारतासंबन्धेनैव द्रव्यत्वव्याप्यं न तु समवायसंबन्धेन । तथा च प्रतियोगिकान्तमाधेयता विशेषण-मनुपादेयमेव । तदुपादाने हेतुतावच्छेदकभेदेन कार्यकारणभावभेदापत्तेः, हेतुतावच्छेदकसंबन्धेन संबन्धित्वे सतीति अनेनापि विशेषणात् वह्निमान् गगनादित्यादौ नातिव्याप्तिः ।

**माथुरीभास्करी**

वस्तुतः= परमार्थतः, एतल्लक्षणकर्तृमते = साध्याभाववदवृत्तित्वात्मकलक्षणकर्तृमते, विशिष्टसत्त्वम् = गुणकर्मान्यत्वविशिष्टसत्त्वम्, विशिष्टनिरुपिताधारतासम्बन्धेनैव = गुणकर्मान्यत्व-वैशिष्टय सत्तात्वोभयधर्मावच्छिन्नधेयतानिरुपिताधारतासंबन्धेनैव, द्रव्यत्वव्याप्यम् = द्रव्यत्व-साध्यकानुमितौहेतुरित्यर्थः। नतु समवायसंबन्धेन = समवायसंबन्धेन हेतुत्वं न स्वीक्रियते । नन्वेतेन प्रकृते किमायातमित्यत आह तथा चेत्यादिना । तथा च = द्रव्यं विशिष्टसत्त्वादित्यत्र विशिष्टसत्त्व-निरुपिताधारत्वस्यैव हेतुतावच्छेदकसंबन्धत्वाभ्युपगमे, प्रतियोगिकान्तम् = हेतुतावच्छेदकावच्छिन्नहेत्व-धिकरणताप्रतियोगिकान्तम्, आधेयताविशेषणम्= संबन्धघटकाधेयताया विशेषणम्, नोपादेयम्= न निवेशनीयम्। ननु समवायसम्बन्धेनैव विशिष्टसत्त्वस्य हेतुत्वमभ्युपेत्याधेयतायां तद्विशेषणमेव निवेश्यतां का हानिरित्यत आह तदुपादान इति । तदुपादाने = हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणता-प्रतियोगिकत्वस्याधेयतायांविशेषणत्वेनोपादाने, हेतुतावच्छेदकभेदेन = धूमत्वसत्तात्वादि हेतुतावच्छेदकानां भिन्नत्वेन, कार्यकारणभावभेदापत्तेः, कार्यस्य = अनुमितेः, कारणस्य = व्याप्तिज्ञानस्य, यः कार्यकारणभावः = कार्यकारणत्वमङ्गीकृतं तस्य, भेदापत्तेः = आनन्त्यापत्तेः ।

नन्वेवं हेतुतावच्छेदकसंबन्धावच्छिन्नाधेयताप्रतियोगिकस्वरूपसंबन्धेन तादृशसाध्याभावा-धिकरणनिरुपितवृत्तित्व सामान्याभावोव्याप्तिरिति फलति । एवंचेत् वह्निमद् गगनादित्यादौ तादृशसंबन्धेन साध्याभावाधिकरण वृत्तित्वाभावस्य गगनात्मकहेतौ सत्त्वादतिव्याप्तिर्दुर्वारैवेत्यत आह हेतुतावच्छेदकेत्यादि। हेतुतावच्छेदक संबन्धेन = हेतुतावच्छेदकीभूत समवायादि संबन्धेन, संबन्धित्वे सतीत्यनेन = संबद्धत्वे सतीति दलेन, विशेषणात् = मेलनात्, व्याप्तिलक्षणस्येति भावः, नातिव्याप्तिः = अतिव्याप्तिर्न भवति। हेतुतावच्छेदक समवाय सम्बन्धेन गगनात्मक हेतोः क्वापि असंबद्धत्वादिति भावः ।

अस्यायमाशयः । द्रव्यं विशिष्टसत्त्वात्, वह्निमान् गगनादित्यादौ, दोषवारणार्थमेव संबन्धकुक्षौ हेतुतावच्छेदकधर्मावच्छिन्नत्वनिवेशः कृतः । तथा चानन्तानां हेतुतावच्छेदकीभूत घटत्व पटत्वादि धर्माणां भेदेनानुमितिव्याप्तिज्ञाननिष्ठ कार्यकारणभावोऽप्यनन्तः स्यात् । तथाहि । धूमत्वावच्छिन्नहेतुकानुमितिं प्रति धूमत्वावच्छिन्नधूमघटितव्याप्तिज्ञानमेवकारणं, अन्यधर्मावच्छिन्न-हेतुकानुमितिं प्रति अन्यधर्माविच्छिन्नहेतुघटितव्याप्तिज्ञानमेव कारणमित्यादिरीत्या कार्यकारण-भावः कल्पनीयः । तथा च महदेव गौरवम् । हेतुतावच्छेदकधर्मावच्छिन्नस्य व्याप्तावप्रवेशेऽनुमितिं प्रति साध्याभाववद्वृत्तित्वरूप व्याप्तिज्ञानस्य कारणत्वमित्येव वक्तव्यमेवं च लाघवमतो हेतुतावच्छेदकधर्मावच्छिन्नहेत्वधिकरणताप्रतियोगिकत्वविशेषणं संबन्धघटकाधेयतायां न निवेश्यते । द्रव्यं विशिष्टसत्त्वादित्यादौ समवायस्य हेतुतावच्छेदकसंबन्धत्वं न स्वीक्रियते किन्तु गुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नाधेयतानिरुपिताधारातायाः एव स्वीक्रियते एवं चैतत्संबन्धावच्छिन्नाधेयताप्रतियोगिकस्वरूपसंबन्धेन द्रव्यनिरुपितवृत्तित्वमात्रस्यैव विशिष्टसत्तायां सत्त्वेन साध्याभावाधिकरणगुणादिनिरुपितवृत्तित्वस्य कुत्रापि असत्त्वेन हेतुभूत विशिष्टसत्त्वेपि असत्त्वात् नाव्याप्तिः। वह्निमान् गगनादित्यादावतिव्याप्तिवारणार्थं हेतुतावच्छेदकसंबन्धेन संबन्धित्वविशेषणमपि व्याप्तिकुक्षौ निवेश्यते, तथाच हेतुतावच्छेदकसंबन्धेन संबन्धित्वे सति तादृश साध्याभावाधिकरणनिरुपितवृत्तित्वाभावो व्याप्तिरिति फलितम्, एवं च गगनहेतोः हेतुतावच्छेदकसमवायसंबन्धेन क्वापि असंबद्धत्वादेव तत्रविशेषणस्यासत्त्वेन विशेषणाभावादेव विशिष्टस्यापि सत्त्वासंभवात् नातिव्याप्तिरिति ।

साध्यातावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकसाध्याभावत्वा-वच्छिन्ना या साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्न साध्याभाववृत्ति साध्यसामान्यीय प्रतियोगितावच्छेदकसंबन्धावच्छिन्नाऽधेयता, तन्निरुपिता या निरवच्छिन्नाधिकरणता, तदाश्रय-निरुपितवृत्तित्वमात्रावच्छिन्ना या हेतुतावच्छेदकावच्छिन्न हेत्वाधिकरणतानिरुपित हेतुतावच्छेदक-संबन्धावच्छिन्नाधेयताप्रतियोगिकस्वरूपसंबन्धावच्छिन्ना प्रतियोगिता तन्निरूपकाभावो व्याप्तिरिति फलितम् । एवमपि घटत्ववान् घटत्वतदभाववदुभयत्वादित्यादावतिव्याप्तिः स्यादिति आशङ्क्य समाधत्ते ननु तथापीत्यादिना ।

**माथुरी**

ननु तथापि उभयत्वमुभयत्रैव पर्याप्तं नत्वेकत्रेति सिद्धान्तादरे घटत्ववान् घटत्वतदभाववदुभयत्वादित्यादौ पर्याप्त्याख्यसंबन्धेन हेतुत्वेऽतिव्याप्तिः, घटत्वाभाववति हेतुतावच्छेदक पर्याप्त्याख्यसंबन्धेन हेतोरवृत्तेः । घटो न घटपटो-भयमितिवत् घटत्वाभाववान् न

घटत्वतदभाववदुभयमित्यपि प्रतीतेरितिचेन्न, तादृशसिद्धान्तदरे हेतुतावच्छेदकसंबन्धेन साध्यसमानाधिकरणत्वे सतीत्यनेनैव विशेषणीयत्वादिति । अत एव निविशतां वा वृत्तिमत्त्वं साध्यसमानाधिकरणत्वं वेति केवलान्वयिग्रन्थे दीधितिकृतः ।

**माथुरीभास्करी**

तथापि = हेतुतावच्छेदकसम्बन्धेन सम्बन्धित्वस्य, तादृशसाध्याभावाधिकरणनिरुपितवृत्तित्वस्य, हेतुतावच्छेदकसंबन्धावच्छिन्नाधेयताप्रतियोगिकस्वरूपसंबन्धेन योऽभावः स एव व्याप्तिरित्युक्ता-वपि, उभयत्वम् = अपेक्षाबुद्धिविशेषविषयत्वम् ,उभयत्रैव = उभयात्मक समुदाय एव, पर्याप्तम्= पर्याप्तिसंबन्धेन वर्तते, नत्वेकत्रेति = प्रत्येक वस्तुनि न वर्तत इति यः सिद्धान्तस्तस्य स्वीकारे, घटत्ववानित्यादि = घटत्वसाध्यके, पर्याप्त्याख्यसंबन्धेन = हेतुतावच्छेदकीभूतपर्याप्तिसंबन्धेन, हेतुत्वे= घटत्व घटत्वाभाववदुभयत्वस्यहेतुत्वे, अतिव्याप्तिः = अतिव्याप्तिदोषः प्रसज्यते । तत्रैव हेतुं दर्शयति घटत्वाभावेत्यादिना,घटत्वाभाववति=साध्याभावात्मकघटत्वाभावाधिकरणेपटादौ, हेतुतावच्छेदकेति=हेतुतावच्छेदकीभूतो यःपर्याप्तिसंबन्धः तेन, हेतोः=घटत्वतदभावोभयात्मकहेतोः, अवृत्तेः = असत्त्वात् । ननु घटत्वाभावाधिकरणे घटत्व तदभावोभयत्वस्य अवृत्तित्वे नास्ति प्रमाणमित्यताह घटोनेत्यादिना । घटो न घटपटोभयमितिवत्=घटो घटपटोभयभिन्नमितिवत्, घटत्वाभावेत्यादि = घटत्वाभाववान् घटत्वतदाभाववदुभयभिन्नमित्याकारकप्रतीतिरूप प्रमाणस्यैव सत्त्वादितिभावः ।

अस्यायमाशयः । परिष्कृते व्याप्तिलक्षणे पूर्वोक्तानां सर्वेषां दोषवारणेपि पर्याप्तिसंबन्धेनोभयत्वादिकं समुदायएववर्तत इति मते घटत्ववान् घटत्वतदभाववदुभयत्वादिति दुष्टस्थलेऽतिव्याप्तिः । तथाहि यथा घटो न घटपटोभयमिति प्रमा जायते तथैव घटत्वाभाववान् न घटत्व तदभाववदुभयमित्याकारक प्रमात्मक प्रतीतिर्जायते । तथा च घटत्वाभावात्मक साध्याभावा-धिकरणे पटादौ घटत्वतदभाववदुभयत्वस्याऽसत्त्वात् तादृश साध्याभावाधिकरणनिरुपित वृत्तित्वा-भावस्य हेतौ सुलभत्वादिति ।

ननु तथापीत्यादिना दत्तमतिव्याप्तिदोषं निराकरोतीतिचेन्नेत्यादिना । इतिचेन्न= अतिव्याप्ति-रिति वक्तुं न शक्यते, तत्रैव हेतुमाह तादृश सिद्धान्तेत्यादिना, तादृश सिद्धान्तादरे= उभयत्वमुभयत्रैवपर्याप्तंनत्वेकत्रेति यः सिद्धान्तस्तस्य स्वीकारे, हेतुतावच्छेदकसंबन्धेन = हेतुतावच्छेदकत्वेनाभिमतो यः संबन्धस्तेन, साध्यसमानाधिकरणत्वेसतीत्यनेन = साध्याधिकरण-वृत्तित्वेसतीति अनेन, विशेषणीयत्वात्=मेलनात्,स्वकीयव्याख्याने प्राचीननैयायिकदुरन्धर रघुनाथशिरोमणि सम्मतिमपि दर्शयत्यतएवेत्यादिना, अत एव = उक्तस्थले अतिव्याप्ति-वारणस्यावश्यकत्वादेव, निविशताम् = व्याप्तिलक्षणे प्रविष्टं भवतु , किं तदित्यत आह, वृत्तिमत्त्वंवेति,

वृत्तिमत्त्वम् = हेतुतावच्छेदक संबन्धेन संवन्धित्वम्, साध्यसमानाधिकरणत्वं वा = साध्याधिकरण-वृत्तित्वं वा, इति = इत्येतानि वचांसि, दीधितिकृतः = रघुनाथशिरोमणयोऽपि प्राहुरिति भावः।

अस्यायमाशयः । उभयत्वादिकमुभयत्रैवपर्याप्तमितिमते पूर्वोक्तस्थलेऽतिव्याप्ति-वारणाय व्याप्तिलक्षणे साध्यसामानधिकरण्यविशेषणमपि देयं, एवञ्च साध्यसमानाधिकरणत्वे सति तादृश साध्याभावाधिकरणनिरुपितवृत्तित्वसामान्याभावो व्याप्तिरिति फलितम् । एवञ्च घटत्ववान् घटत्वतदभाववदुभयत्वादित्यत्र तादृशसाध्याभाववद्वृत्तित्वाभावस्य हेतौ सत्त्वेपि हेतुतावच्छेदकपर्याप्तिसंबन्धेन साध्याधिकरणवृत्तित्वरूप साध्यसामानाधिकरण्यस्यासत्त्वेन साध्यसामानाधिकरण्यविशिष्ट साध्याभाववदवृत्तित्वरूप व्याप्तिलक्षणस्य तत्रासत्त्वेन नातिव्याप्तिः। रघुनाथा अपि तत्रातिव्याप्तिवारणाय साध्यासामानाधिकरण्यविशेषणं व्याप्तिलक्षणे निवेशितवन्तः । निविशतां वृत्तिमत्त्वं साध्यसामानाधिकरण्यंवेति ग्रन्थेनेति ।

वह्निमद् गगनात्, द्रव्यं विशिष्टसत्त्वात्, सत्तावान् जातेरित्यादौ प्रदर्शितदोषाणां वारणायोक्त-मन्येषां लघुलक्षणं दर्शयति केचित्त्वित्यादिना ।

**माथुरी**

**केचित्तु निरुक्त साध्याभावत्वविशिष्टनिरुपिता या विशेषणताविशेषसंबन्धेन थथोक्तसंबन्धेन वा निरवच्छिन्नाधिकरणता, तदाश्रयव्यक्त्यवर्तमानं हेतुता-वच्छेदकसंबन्धावच्छिन्न यद्धर्मावच्छिन्नाधिकरणत्वसामान्यं तद्धर्मवत्त्वं विवक्षितम्, धूमवान् वह्नेरित्यादौ पर्वतादि वह्न्यधिकरणताव्यक्तेर्धूमाभावाधिकरणावृत्तित्वेऽपि अयोगोलकनिष्ठ वह्न्यधिकरणताव्यक्तेरतथात्वान्नातिव्यप्तिरिति आहुः ।**

**माथुरीभास्करी**

निरुक्तेत्यादि = साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्नप्रतियोगिताका-भावत्वावच्छिन्ना, विशेषणताविशेषसंबन्धेन = स्वरूपसंबन्धेन, यथोक्तसंबन्धेन वा = साध्यतावच्छेदकसंवन्धावच्छिनसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगिता-वच्छेदकसंबन्धेन वा, निरवच्छिन्नाधिकरणता = किञ्चिदनच्छिन्नाधिकरणता, तदाश्रयव्यक्त्यवर्तमानम्= निरवच्छिन्नाधिकरणताश्रयव्यक्तिष्ववर्तमानम्, हेतुतावच्छेदकसंबन्धेत्यादि= हेतुतावच्छेदक-संबन्धावच्छिन्नयद्धर्मावच्छिन्नाधेयतानिरुपिताधिकरणत्वसामान्यम्, तद्धर्मवत्त्वम्= हेतुतावच्छेदकी-भूततद्धर्मविशिष्टत्वम्, विवक्षितम्= साध्याभाववदवृत्तित्वपदेन वोधितम् ।

सामान्यपदप्रयोजनमाह । धूमवान् वह्नेरित्यादिना । इत्यादौ = इत्यादि दुष्टहेतौ, पर्वतादीत्यादि= हेत्वधिकरणीभूतपर्वतादिनिष्ठं यद्वह्नित्वावच्छिन्नाधिकरणत्वं तदात्मकव्यक्तेः, धूमाभावाधिकरणावृत्तित्वेऽपि = धूमाभावात्मक साध्याभावाधिकरणायोगोलकादौ, अवृत्तित्वेऽपि= असत्त्वेपि, अयोगोलकेत्यादि = यद्धर्मावच्छिन्नाधिकरणत्व सामान्यान्तर्गतायाः अयोगोलकनिष्ठ विह्नित्वावच्छिन्नाधिकरणताव्यक्तेः, अतथात्वात् = असत्त्वाभावात्, नातिव्याप्तिरिति = अतिव्याप्ति-र्नास्तीत्यवोचन्निति भावः ।

केचित्त्वित्यादेरयमाशयः । तादृश साध्याभावाधिकरणनिरुपितवृत्तित्वाभावो हेतौ न निवेशनीयः । किन्तु हेतुतावच्छेदकावच्छिन्नहेतुतावच्छेदकसंवन्धावच्छिन्नाधिकरणतायामेवनिवेशनीयः । साध्याभावाधिकरणनिरुपितवृत्तितायामपि हेतुतावच्छेदकसंवन्धावच्छिनत्वं न निवेशनीयम्, किन्तु स्वरूपसंवन्धावच्छिन्नत्वमेव तथा च पूर्वोक्त साध्याभावाधिकरणनिरुपित स्वरूपसंवन्धावच्छिन्न-वृत्तित्वसामान्याभावः हेतुतावच्छेदकसंवन्धावच्छिन्नयद्धर्मावच्छिन्नाधिकरणताव्यक्तिषु सर्वासु वर्तते तद्धर्मवत्त्वमेव व्यप्तिरिति फलितम् । एवञ्चात्र यद्धर्मपदेन हेतुतावच्छेदकधर्मो ग्राह्यः । वह्निमद्‌गगनात्, इत्यादौ समवायसम्बन्धेन गगनत्वावच्छिन्नाधिकरणत्वाप्रसिध्यैव यत्पदेनगगनत्वस्य धर्तुमशक्यत्वात् नातिव्याप्तिः । द्रव्यं विशिष्टसत्त्वादित्यादौ, समवायसंबन्धावच्छिन्न विशिष्टसत्तात्वावच्छिन्नाधिकरणता-व्यक्तिषु सर्वास्वपि द्रव्यत्वाभावाधिकरणगुणादि निरूपितवृत्तित्वसामान्याभवस्यसत्त्वान्नाव्याप्तिः । सत्तावान् जातेरित्यादावपि सत्ताभावाधिकरण जात्यादिनिरूपित स्वरूपसंबन्धावच्छिन्नवृत्तित्वस्य जातित्वादौ प्रसिद्धस्य जातित्वावच्छिन्नाधिकरणताव्यक्तिष्वसत्त्वान्नाव्याप्तिः । धूमवान् वह्नेरित्यादौ साध्याभावात्मक धूमाभावाधिकरणनिरुपितवृत्तित्वस्यायोगोलकनिष्ठस्य वह्नित्वावच्छिन्नाधिकरणताव्यक्तौ सत्त्वादेव वह्न्यधिकरणताव्यक्तिषु सर्वासु तदभावस्यासत्त्वान्नातिव्याप्तिः। लक्षणे सामान्यपदं धूमवान् वह्नेरित्यादावतिव्याप्तिवारणार्थमेव । अन्यथा पर्वतादिवह्नित्वावच्छिन्नाधिकरणताव्यक्तौ धूमा-भावाधिकरणनिरुपितवृत्तित्वस्यासत्त्वेनातिव्याप्तिस्तन्निवेशे तु यावदन्तर्गतायोगोलकनिष्ठ वह्नित्वा-वच्छिन्नाधिकरणताव्यक्तावेव तदभावस्यासत्त्वेन यत्पदेन वह्नित्वस्य धर्तुमशक्यत्वेन नातिव्याप्तिः ।

तथाचास्मिन् कल्पे हेतुतावच्छेदकावच्छिन्न हेत्वधिकरणतानिरुपित हेतुतावच्छेदक-संबन्धावच्छिन्नाधेयताप्रतियोगिकस्वरूपसंबन्धेनेत्यस्यानिवेशेन गौरवमपि नास्तीति । (एतादृशनिर्वचनस्य यथाश्रुतलक्षणाप्रतिपाद्यत्वात् हेतुतावच्छेदकधर्मघटितत्वेन हेतुतावच्छेदक भेदेन कार्यकारणभावभेदापत्तेश्च, केचिदित्यस्वरससूचितः ।(सं))

साध्याभाववदवृत्तित्वस्य प्रकारान्तरेणार्थं वर्णयतां मतं दर्शयत्यन्येत्वित्यादिना ।

**माथुरी**

अन्येतु हेतुतावच्छेदकसंबन्धावच्छिन्न हेतुतावच्छेदकावच्छिन्न-स्वाधिकरणताश्रयवृत्ति यन्निरवच्छिन्नाधिरकणत्वं तदवृत्ति निरुक्तसाध्याभावत्व-विशिष्टनिरुपित यथोक्त संबन्धावच्छिन्नाधिकरणतात्वकत्वमिति, विशेषण विशेष्यभावव्यत्यासेतात्पर्यम्, स्वपदं हेतुपरम् । इत्थञ्च कपिसंयोगाभाववान् सत्त्वात् ,कपिसंयोगिभिन्नं गुणत्वादित्यादावपि नाव्याप्तिरित्याहुरिति संक्षेपः ।

**माथुरीभास्करी**

हेतुतावच्छेदकसंबन्धावच्छिन्नेत्यादि = हेतुतावच्छेदकसंबन्धावच्छिन्ना हेतुतावच्छेदकधर्ममात्रावच्छिन्ना या आधेयता तन्निरूपिता या स्वाधिकरणता हेत्वधिकरणता तस्या आश्रये विद्यमानं यत् किञ्चिदनवच्छिन्नाधिकरणत्वम्, तदवृत्तीत्यादि = निरवच्छिन्नाधिकरणत्वेऽविद्यमानं यत्, अस्याग्रिमाधिकरणतात्वेनान्वयः साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकधर्ममात्रावच्छिन्नप्रतियोगिताकाभावत्वमात्रवच्छिन्ना या,साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नसाध्याभाववृत्ति साध्यसामान्यीयप्रतियोगितावच्छेदकसंबन्धावच्छिन्नाऽऽधेयता तन्निरूपित निरवच्छिन्नाधिकरणतात्वं यस्य हेतोस्तस्याभावः निरवच्छिन्नाधिकरणतात्वम्, इति= एवं रीत्या, विशेषणविशेष्यभावव्यत्यासे, तात्पर्यम्=विशेषणीभूत साध्याभावाधिकरणत्वस्य विशेष्यत्वेन,विशेष्यीभूत हेत्वधिकरणताया विशेषणत्वेनाचात्र निवेशात् ।केचित्तु कल्पापेक्षया विशेष्यत्वविशेषणत्वेनाभिमतयोः वैलक्षण्यमेवास्तीति भावः । स्वपदम्=लक्षणघटकस्वपदम् हेतुपरम् = हेतुबोधकम्, विशेषण विशेष्यभावव्यत्यासेन एवंरीत्या लक्षणकरणस्य प्रयोजनं दर्शयतीत्थंचेत्यादिना, इत्थञ्च = विशेषणविशेष्यभावं व्यत्यस्य लक्षणेकृतेसति, कपिसंयोगाभाववानित्यादि = अत्र कल्पे साध्याभावाधिकरणतायां निरवच्छिन्नत्वस्यानिवेशात् हेत्वधिकरण द्रव्यादिवृत्ति द्रव्यत्वाद्यवच्छिन्नाधिकरणतायां साध्यभावात्मक कपिसंयोगत्वावच्छिन्नाधिकरणतात्वस्याऽसत्त्वान्नाव्याप्तिरिति भावः। एवं कपिसंयोगिभिन्नं गुणत्वादित्यत्रापि कपिसंयोगिभेदाभावस्य कपिसंयोग स्वरूपत्वेपि तदवच्छिन्नाधिकरणतात्वस्य हेत्वधिकरणगुणादिनिष्ठ निरवच्छिन्न सत्ताद्यधिकरणतायामसत्वान्नाव्याप्तिरितिभावः ।

अस्यायमाशयः । अस्मिन् कल्पे कपिसंयोगाभाववान् सत्त्वादित्यत्रापि अव्याप्तिर्वार्यते । तथा कपिसंयोगिभेदाभावस्य प्रतियोगितावच्छेदक कपिसंयोगस्वरूपत्वमतेपि कपिसंयोगिभिन्नं गुणत्वादित्यादावव्याप्तिर्वार्यते । केचित्तु कल्पापेक्षया विशेषणविशेष्यभाव वैलक्षण्यस्यैवात्र सत्त्वेन गौरवमपि नास्ति । तथाहि हेतुतावच्छेदकसंबन्धेन हेतुतावच्छेदकीभूत

यद्धर्मावच्छिन्नाधिकरणनिष्ठनिरवच्छिन्नाधिकरणतानिरुपितवृत्तित्वाभावस्तादृशसाध्याभावाधिकरणतात्वेवर्तते तद्धर्मवत्त्वमेव लक्षणमिति पर्यवसितम् । तथाहि वह्निमान् धूमादित्यादौ धूमत्वावच्छिन्नाधिकरणनिष्ठनिरवच्छिन्नाधिकरणतायां वह्निसामान्याभावाधिकरणतात्वस्यासत्त्वेन यत्पदेन धूमत्वस्य ग्रहणान्नाव्याप्तिः। धूमवान् वह्नेरित्यादौ हेतुतावच्छेदकवह्नित्वावच्छिन्नाधिकरणायोगोलकनिष्ठ वह्नित्वावच्छिन्नाधिकरणत्वनिरूपितवृत्तित्वाभावस्य साध्याभावात्मक धूमाभावाधिकरणतात्वेऽसत्त्वेन यद्धर्मपदेन वह्नित्वस्य ग्रहीतुमशक्यत्वेन नातिव्याप्तिः । कपिसंयोगाभाववान् सत्त्वादित्यादौ साध्याभावाधिकरणतायां निरवच्छिन्नत्व विशेषणस्यानुपादानात् सत्तात्वावच्छिन्नाधिकरणद्रव्यादिनिष्ठनिरवच्छिन्न सत्ताद्यधिकरणतायां संयोगात्मक साध्याभावत्वावच्छिन्नाधिकरणतात्वस्यासत्त्वेन यद्धर्मपदेन सत्तात्वस्य ग्रहणसंभवान्नाव्याप्तिः । यद्यपि तत्र हेत्वधिकरण निष्ठाधिकरणता कपिसंयोगाधिकरणता भावितुमर्हति, तथापि कपिसंयोगा-धिकरणताया निरवच्छिन्नत्वाभावात् हेत्वधिकरणनिरवच्छिन्नाधिकरणतापदेन तस्याः ग्रहणासंभवात् तामधिकरणतामादायापि अव्याप्तिर्दातुं न शक्यते । कपिसंयोगिभिन्नं गुणत्वादित्यत्र गुणत्वत्वात्मक हेतुतावच्छेदकावच्छिन्नाधिकरण गुणादिनिष्ठ निरवच्छिन्नसत्ताद्यधिकरणतायां साध्याभावात्मक कपिसंयोगावच्छिन्नाधिकरणतात्वस्यासत्त्वेन यद्धर्मपदेन गुणत्वस्य ग्रहणान्नाव्याप्तिरिति ।

(अत्रापिकल्पे यथाश्रुतार्थपरित्यागः हेतुतावच्छेदकस्य व्याप्तिघटकत्वेन अनन्तकार्यकारणभावापत्तिश्चवर्ततइति मनसिनिधाय अन्येत्वित्यस्वरसस्सूचितः । (सं)

प्रथम लक्षण व्याख्या समाप्ता ।

## अथ द्वितीय लक्षणम् ।

**माथुरी**

लक्षणान्तरमाह ।

## चिन्तामणिः

### 'साध्यवद्भिन्न साध्याभाववदवृत्तित्वम्'।

**माथुरीभास्करी**

अव्यभिचरितत्वशब्दप्रतिपाद्यसामान्यभेदसाधक हेतुघटकसाध्यवद्भिन्न-साध्याभाववदवृत्तित्वपदार्थं परिष्कर्तुमुपक्रमते लक्षणान्तरमाहेत्यादिना । लक्षणन्तरम् = प्रथमलक्षणभिन्नलक्षणम् ।

**माथुरी**

साध्यवद्भिन्नो यः साध्याभाववान् तदवृत्तित्वमित्यर्थः । कपिसंयोगी एतद्वृक्षत्वादित्याद्यव्याप्यवृत्तिसाध्यकाव्याप्तिवारणाय ''साध्यवद्भिन्नेति'' साध्याभाववतो विशेषणमिति प्राञ्चः ।

**माथुरीभास्करी**

परव्याख्याननिराकरणमन्तरेण स्वव्याख्यानस्योत्कर्षाप्रतीतेरादौ परव्याख्याननिरसनाय परव्याख्यानमेव दर्शयति साध्यवद्भिन्नेत्यादिना । साध्यवद्भिन्नः= साध्यवत्त्वावच्छिन्नप्रतियोगिताक-भेदवान् यः, साध्याभाववान्= साध्याभावाधिकरणम्, तदवृत्तित्वम् = साध्यवद्भिन्न साध्याभावाधिकरणनिरूपित वृत्तित्वसामान्याभावो व्याप्तिरितिभावः । ननु साध्यभाववदवृत्तित्वमात्रस्य निवेशेनैव सकलदोषवारणे साध्यवद्भिन्नदलं व्यर्थस्यादित्यत आह ''कपिसंयोगी''त्यादि = कपिसंयोग्येतद्वृक्षत्वादित्यादिर्योऽव्याप्यवृत्तिसाध्यकः सद्धेतुस्तत्राव्याप्तिदोषवारणाय । साध्यवद्भिन्नेति = साध्यवद्भिन्नपदार्थः, साध्याभाववतः = साध्यभाववत्पदार्थस्य, विशेषणम्= विशेषणत्वेन प्रवेशितः, इति प्राञ्चः=प्राचीननैयायिकाः। एवं रीत्या तदर्थः कार्य इति वदन्तीति भावः ।

अस्यायमाशयः । साध्यभाववदवृत्तित्वमिति यद्युच्येत तदा वह्निमान् धूमादित्यादौ लक्षण-समन्वयेऽपि, कपिसंयोग्येतद्वृक्षत्वादित्यादावव्याप्तिः । कपिसंयोगाभावात्मक साध्याभावाधिकरणे एतद्वृक्षे एतद्वृक्षत्वात्मकहेतोःसत्त्वात् । अतस्तद्वारणाय साध्यवद्भिन्नः साध्यभाववति निवेशनीयमेवञ्च साध्यवद्भिन्नसाध्याभाववान् न वृक्षःतत्र साध्यवद्भिन्नत्वस्यासत्त्वात्, किन्तु गुणादिकमेव तत्र-हेतोरसत्त्वान्नाव्याप्तिः । एतदर्थस्य लाभायैव साध्यवद्भिन्नो यः साध्याभाववानिति कर्मधारयसमासं विधाय ततस्तेनसहावृत्तित्वपदस्य समासो विधेय इति प्राचीन नैयायिकाः कथयन्तीति ।

साध्यवद्भिन्नो य इत्यादिना यत्प्राचीन व्याख्यानं प्रदर्शितं तद्दूषयति तदसदित्यादिना ।

**माथुरी**

तदसत् ''साध्याभाववदित्यस्य व्यर्थतापत्तेः साध्यवद्भिन्नावृत्तित्वमित्यस्यैवसम्यक्त्वात्।

**माथुरीभास्करी**

तत्=उक्तं प्राचीनव्याख्यानम्, असत्=न समीचीनं दोषग्रस्तमितियावत्। तमेव दोषमाह साध्येति, साध्याभाववदित्यस्य = साध्याभाववद्दलस्य, व्यर्थतापत्तेः, वैयर्थ्यप्रसक्तेः, साध्यवद्भिन्नावृत्तित्वमित्यस्य = साध्यवद्भिन्नावृत्तित्वमात्रस्यैवाव्यभिचरितत्वपदार्थत्वाभ्युपगमे, सम्यक्त्वात् = कपिसंयोग्येतद्वृक्षत्वादित्याद्यव्याप्यवृत्तिसाध्यकस्थलेऽप्यव्याप्तिवारणात्।

अस्यायमाशयः। प्राचीनव्याख्याने साध्यवद्भिन्नसाध्याभाववदवृत्तित्वमिति लक्षणं फलितम्। एवञ्च वैयर्थ्यम्। तथाहि स्वसमानाधिकरण प्रकृतसाध्यव्याप्यतावच्छेदकधर्मान्तरघटितत्वं वैयर्थ्यम्। अत्र स्वपदेन हेतुतावच्छेदकत्वेनाभिमतो धर्मोग्राह्यः। तथा च,'व्याप्तिः, स्वेतरभिन्ना, साध्यवद्भिन्नसाध्याभाववदवृत्तित्वा' दित्यत्र, स्वं साध्यवद्भिन्नसाध्याभाववदवृत्तित्वत्वं, तत्समानाधिकरणी-भूतं प्रकृतसाध्यात्मकव्याप्तीतरभेद व्याप्यतावच्छेदकं साध्यवद्भिन्नावृत्तित्वत्वमपि, व्याप्तीतरभेदा-नुमितौ साध्यवद्भिन्नावृत्तित्वस्यापि हेतुत्वसंभवात्। साध्यवद्भिन्नावृत्तित्वत्वं धर्मान्तरमपि साध्यवद्भिन्न - साध्याभाववदवृत्तित्वाविषयका या साध्यवद्भिन्नावृत्तित्वविषयकप्रतीतिस्तद्विषयतावच्छेदकत्वात्, स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकस्यैव धर्मान्तरपदार्थत्वात्। तथा च स्वसमानाधिकरण-साध्यव्याप्यतावच्छेदकीभूत धर्मान्तरात्मक साध्यवद्भिन्नावृत्तित्वघटितत्वस्य साध्यवद्भिन्न साध्याभाववदवृत्तित्वेसत्त्वात्। तथा च वैयर्थ्यदोषग्रस्तत्वेन प्राचीनव्याख्यानं न समीचीनमिति।

प्राचीनव्याख्याने दोषमभिधाय स्वाभिमतं व्याख्यानं दर्शयति 'नव्यास्त्वि' त्यादिना।

**माथुरी**

नव्यास्तु साध्यवद्भिन्ने साध्याभावः साध्यवद्भिन्नसाध्यभावस्तद्व-दवृत्तित्वमिति सप्तमीतत्पुरूषोत्तरं मतुप्प्रत्ययः। तथा च साध्यवद्भिन्न-वृत्तिर्यः साध्याभावस्तद्वदवृत्तित्वमित्यर्थः। एवञ्च साध्यवद्भिन्नवृत्तीत्यनुक्तौ संयोगी द्रव्यत्वादित्यादाव्याप्तिः। संयोगाभाववति द्रव्ये द्रव्यत्वस्य वृत्तेः, तदुपादाने च संयोगवद्भिन्नवृत्तिः संयोगाभावो गुणादिवृत्तिसंयोगाभाव एव, अधिकरणभेदेनाभावभेदात् तद्वदवृत्तित्वान्नाव्याप्तिः।

**माथुरीभास्करी**

सध्यवद्भिन्ने = साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदाधिकरणे, साध्याभावः= साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावः, साध्यवद्भिन्नेति=साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदाधिकरण-

वृत्तिसाध्याभाव:, तद्वद्वृत्तित्वम्= साध्यवद्भिन्नवृत्तिसाध्याभाववदवृत्तित्वम्,इति=एवं विग्रहवाक्य-मित्यर्थ:। स शब्द: कथं निष्पन्न इत्यत आह सप्तमीति = सप्तमीतत्पुरुषसमाससानान्तरम्, मतुप्प्रत्यय:= मतुप्नामक प्रत्यय: कृतेति भाव: । एवं समासेकृते कोऽर्थ: पर्यवसन्न इत्यत आह तथाचेति। तथा च= कर्मधारयसमासात्मक साध्यवद्भिन्नसाध्याभावतोमतुप्प्रत्ययेकृते, साध्यवद्भिन्नवृत्ति: = साध्यवत्त्वा-वच्छिन्नप्रतियोगिताकभेदाधिकरणवृत्ति:, य: साध्याभाव: = साध्यतावच्छेदकसंबन्धावच्छिन्न साध्यतावच्छेदकावच्छिन्नप्रतियोगिताको योऽभाव:, तद्वद्वृत्तित्वम् = तदधिकरणनिरूपित-वृत्तित्वाभाव:, इत्यर्थ: = एवमर्थ: पर्यवसन्न इति भाव: । एवञ्च = साध्यवद्भिन्नवृत्तिसाध्याभाव-वदवृत्तित्वरूपार्थे पर्यवसन्ने सति, साध्यवद्भिन्नवृत्तीत्यनुक्तौ=साध्यवद्भिन्नवृत्तित्वस्य साध्याभावे विशेषणत्वेनानिवेशे, संयोगी द्रव्यत्वादित्यादौ=संयोगी द्रव्यत्वादित्याद्यव्याप्यवृत्तिसाध्यकसद्धेतौ, अव्याप्ति:=अव्याप्तिदोष:। अव्याप्तिमेवसङ्गमयति संयोगीत्यादिना,संयोगाभाववति= साध्याभावात्मक-संयोगाभावाधिकरणे, द्रव्ये = पृथिव्याद्यात्मकद्रव्ये, द्रव्यत्वस्य = द्रव्यत्वात्मकप्रकृतहेतो:, वृत्ते: = सत्त्वात्। तदुपादाने = साध्याभावे साध्यवद्भिन्नवृत्तित्वात्मकविशेषणस्यनिवेशे, संयोगवद्भिन्नवृत्ति:= संयोगात्मकसाध्यवद्भेदाधिकरणे वर्तमान:, संयोगाभाव:= संयोगाभावात्मक साध्याभावपदार्थ:, गुणादिवृत्ति: संयोगाभाव एव=गुणादिषुवर्तमानस्संयोगाभाव एव न तु वृक्षादिवृत्तिसंयोगाभाव इति परमार्थ: । ननु वृक्ष गुणादिवृत्तिसंयोगात्यन्ताभावस्यैकत्वात् वृक्षादिवृत्तिसंयोगाभावोऽपि गुणादि- वृत्ति संयोगाभावस्वरूपएवस्यादित्यत आहाधिकरणेत्यादिना । अधिकरणभेदेन = आश्रयभेदेन, अभावभेदात् = अभावस्यभिन्नत्वाभ्युपगमात्, प्रतियोगितावच्छेदकभेदेनाभावभेदो न स्वीक्रियते किन्तु अधिकरणस्य भेदेनैवाभावोभिद्यत इति भाव:।तद्वद्वृत्तित्वात्= संयोगवद्भिन्नगुणादिवृत्ति संयोगाभाववति गुणादौ द्रव्यत्वात्मकहेतोरसत्वात्, नाव्याप्ति:=अव्याप्ति: न भवति।

नव्यास्त्वित्यादेरयमाशय:। साध्यवद्भिन्ने साध्याभाव इति विग्रहेण प्रथमं सप्तमीतत्पुरुष-समासस्तदनन्तरं साध्यवद्भिन्नसाध्याभावोऽस्मिन्नस्तीत्यर्थे मतुप्प्रत्यये साध्यवद्भिन्नसाध्याभाव-वदवृत्तित्वमितिनिष्पन्नम् ।तथा च साध्यवद्भिन्नवृत्तिसाध्याभावाधिकरणनिरूपितवृत्तित्वा-भावोव्याप्तिरितिफलितम्। एवञ्चात्र यदि केवलं साध्याभाववदवृत्तित्वमेव व्याप्तिरिति उच्येत तदा संयोगस्य साध्यतायां द्रव्यत्वस्य हेतुत्वेऽव्याप्ति:। संयोगाभावात्मक साध्याभावाधिकरणे पृथिव्यां-हेतो: सत्त्वात् ।अतोऽत्राव्याप्तिवारणाय साध्यवद्भिन्नवृत्तित्वार्थक साध्यवद्भिन्नदलं निवेशनीयम् । तथा च साध्यात्मक संयोगवद्भेदस्यव्याप्यवृत्तित्वेन संयोगाधिकरणे पृथिव्यां असत्त्वात् संयोगवद्भिन्नवृत्तिसाध्याभाव: गुणवृत्तिसंयोगाभावएव तस्याधिकरणं गुण एव न तु पृथिव्यादिकमधिकरणभेदेनाभावस्यभिन्नत्वात् । तथा च साध्यवद्भिन्नवृत्ति साध्याभावा-धिकरणेगुणादौ द्रव्यत्वात्मक हेतोरसत्वान्नाव्याप्तिर्नवावैयर्थ्य दोष इति।

एवमपि साध्याभाववदित्यस्य वैयर्थ्यं स्यादित्याशङ्क्य समाधत्ते न च तथापीत्यादिना।

**माथुरी**

न च तथापि साध्यवद्भिन्नावृत्तित्वमित्येवास्तु लक्षणं किं साध्याभाव-वदित्यनेनेति वाच्यम्।यथोक्तलक्षणे तस्याप्रवेशेन वैयर्थ्याभावात्, तस्यापि लक्षणान्तरत्वात्।

**माथुरीभास्करी**

तथापि=तस्य सप्तमीतत्पुरुषानन्तरं मतुप्प्रत्ययविधायोक्तार्थस्वीकारेऽपि, साध्यवद्भिन्नावृत्तित्वमित्येव= साध्यवत्त्वावच्छिन्नप्रतियोगिकभेदाधिकरणावृत्तित्वमात्रम्, लक्षणमस्तु = व्याप्तेर्लक्षणं स्वीकरणीयम्, साध्याभाववदित्यनेन = साध्याभावाधिकरणनिवेशनेन, किम् = किमपि प्रयोजनं नास्तीति भावः।

अस्यायमाशयः। लक्षणवाक्येऽव्याप्त्यादि दोषवारकाणां पदानामेवनिवेश उचितो नान्येषां एवं च साध्याभाववद्दलस्याप्रवेशेऽपि दोषासंभवात् तद्दलनिवेशोव्यर्थः। साध्यावद्भिन्नावृत्तित्वस्यैव लक्षणत्वस्वीकारे सामञ्जस्यादिति। न च तथापीत्यादिनोक्तां शङ्कामपाकर्तुं युक्तिंदर्शयति यथोक्तेत्यादिना। यथोक्तलक्षणे= साध्यवद्भिन्नवृत्तिसाध्याभाववदवृत्तित्वलक्षणे, तस्य = साध्यवद्भिन्नावृत्तित्वस्य, अप्रवेशेन = अनिवोशेन, वैयर्थ्याभावात् = स्वसमानाधिकरण प्रकृतसाध्यव्याप्यतावच्छेदकधर्मान्तरघटितत्वरुप वैयर्थ्यदोषस्याभावात्। तस्यापि = साध्यवद्भिन्नावृत्तित्वस्यापि, लक्षणान्तरत्वात् = अन्यलक्षणत्वात्।

अस्यायमाशयः। साध्यवद्भिन्नसाध्याभाववदवृत्तित्वमिति यल्लक्षणमुक्तं तत्र अवृत्तित्वपदार्थस्य साध्याभाववत्पदार्थेन सहैवान्वयो न साध्यवद्भिन्नपदार्थेनापि। साध्यवद्भिन्नावृत्तित्वमित्यत्रावृत्तित्वपदार्थेन सह साध्यवद्भिन्नपदार्थस्यैवान्वयः। तथा च साध्यवद्भिनावृत्तित्वपदार्थस्य साध्यवद्भिन्नवृत्तिसाध्याभाव-वदवृत्तित्वलक्षणेऽप्रविष्टत्वात् साध्यवद्भिन्नवृत्तिसाध्याभाववदवृत्तित्वत्वात्मक स्वसामानाधिकरण्यस्य साध्यवद्भिन्नावृत्तित्वत्वेऽसत्वेन,स्वसमानाधिकरणधर्मपदेन साध्यवद्भिन्नावृत्तित्वत्वस्य ग्रहणासंभवात् तामादाय वैयर्थ्यदोषो न प्रकृतलक्षणे भवितुमर्हति। साध्यवद्भिन्नावृत्तित्वस्य पृथक् लक्षणत्वे नास्ति कोऽपि विरोधो अस्माकमिति।

ननु तल्लक्षणे वैयर्थ्यदोषाभावेऽपि साध्याभावपदं निष्प्रयोजनमेव स्यादित्याशङ्क्य समाधत्ते, न च तथापीत्यादिना।

**माथुरी**

न च तथापि साध्यवद्भिन्नवृत्तिर्यस्तद्वदवृत्तित्वमेवास्तु किं साध्याभावपदेनेति वाच्यम्,तादृश द्रव्यत्वादिमद्वृत्तित्वादसंभवापत्तेः। साध्याभावेत्यत्र साध्यपदमप्यतएव द्रव्यत्वादेरपि द्रव्यत्वाभावाभावत्वात् भावरूपाभावस्याधिकरणभेदेन भेदाभावात् ।

**माथुरीभास्करी**

तथापि = तल्लक्षणे वैयर्थ्यदोषाभेवपि, साध्यवद्भिन्नवृत्तिः = साध्यवत्त्वावच्छिन्नप्रतियोगिताक-भेदाधिकरणवृत्तिः, यः = पदार्थः, तद्वदवृत्तित्वमेव = साध्यवद्भिन्नवृत्ति पदार्थवदवृत्तित्वमेव, अस्तु = व्याप्तिलक्षणमित्युच्यताम् । किं साध्याभावपदेन=साध्याभावदलनिवेशेन प्रयोजनं नास्ति । न च तथापित्यादिनोक्तां शङ्कांनिराकर्तुं युक्तिंदर्शयति तादृशद्रव्यात्वादित्यादिना । तादृशद्रव्यत्वादीति=पर्वतोवह्निमानित्यादौ साध्यवद्भिन्नजलहृदादिवृत्तिद्रव्यत्वादिमत्पर्वतादि-वृत्तित्वात्, असंभावपत्तेः=असंभवदोषापत्तेः। साध्याभावेत्यत्र= साध्याभावघटकीभूतम्, साध्यपदमपि= साध्यदलमपि,अत एव=असंभवदोषप्रसङ्गादेव । ननु साध्यपदानुपादाने साध्यवद्भिन्नवृत्ति द्रव्यत्वादिकमादाय नासंभवो द्रव्यत्वादेर्भावस्वरूपत्वेनाभावात्मकत्वाभावादित्यत आह द्रव्यत्वादेरपीत्यादि । द्रव्यत्वादेरपि = द्रव्यत्वसत्तादेरपि, द्रव्यत्वाभावाभावत्वात् = द्रव्यत्वाद्यभावाभावस्वरूपत्वात् । नचाधिकरणभेदेनाभावस्यभिन्नत्वात् साध्यवद्भिन्नजल-हृदादिवृत्ति द्रव्यत्वाभावाभावादेरधिकरणं जलहृदादिरेव, न तु पर्वतादिकमिति कथमसंभवः स्यादित्यत आह भावरूपेत्यादि । भावरूपाभावस्य = भावात्मकाभावस्य, अधिकरणभेदेन= आश्रयभेदेन, भेदाभावात्=भिन्नत्वानभ्युपगमात् ।

अस्यायमाशयः । साध्यवद्भिन्नसाध्याभाववदवृत्तित्वमित्यत्र साध्याभावस्यानुपादाने साध्य-वद्भिन्ने वृत्तिर्यःतद्वदवृत्तित्वमिति लक्षणं पर्यवस्यति एवंचेद्वह्निमान् धूमादित्यादौ सर्वत्रासंभवः । वह्निमद्भिन्ने वर्तमानं यद्द्रव्यत्वादिकं तद्वति पर्वतादौ धूमादिरुपहेतोः सत्त्वात् । केवल साध्यपदानुपादाने साध्यवद्भिन्न-वृत्तिर्योऽभावः तद्वदवृत्तित्वमिति लक्षणं पर्यवस्यति एवंचेद्वह्निमान्धूमादित्यादौ पुनरसंभवः । वह्निमद्भिन्ने हृदादौ वर्तते यो द्रव्यत्वाभावाभावः तद्वति पर्वतादौ हेतोरसत्त्वात् सप्तमपदार्थात्मकाभावस्य अधिकरणभेदेन भिन्नत्वेपि भावात्मकाभावस्याधिकरण भेदेन भेदाभावात् ।

सप्तमपदार्थात्मकाभावस्यैवाधिकरणभेदेन भेदमभ्युपगम्य साध्याभावपदस्य सार्थकत्वसम्पादने स्थलान्तरेऽव्याप्तिः स्यादित्याशङ्कते ननु तथापीत्यादिना ।

**माथुरी**

ननु तथापि घटाकाशसंयोगघटत्वान्यतराभाववान् गगनत्वादित्यादौ घटानधिकरणदेशावच्छेदेन घटाकाशसंयोगाभावस्य गगने सत्त्वात्सद्धेतुतयाऽव्याप्तिः। साध्यवद्भिन्नेघटे वर्तमानस्य साध्याभावस्य घटाकाशसंयोगरूपस्य गगनेऽपि सत्त्वात् तत्र च हेतोर्वृत्तेः । न च साध्यवद्भिन्नवृत्तित्वविशिष्टसाध्याभाववत्त्वं विवक्षितमिति वाच्यम्, साध्याभावपदवैयर्थ्यापत्तेः । साध्यवद्भिन्नवृत्तित्वविशिष्टवदवृत्तित्वस्यैव सम्यक्त्वादिति चेन्न । अभावाभावस्यातिरिक्तत्वमतेनैतल्लक्षणकरणात्। तथाचा-धिकरणभेदेनाभावभेदात्साध्यवद्भिन्ने घटे वर्तमानस्य साध्याभावस्य प्रतियोगि-व्यधिकरणस्य प्रतियोगिमतिगगनेऽसत्त्वादव्याप्तेरभावात्। नचैवं साध्याभावेत्यत्र साध्यपदवैयर्थ्यम्, अभावाभावस्यातिरिक्तत्वेन द्रव्यत्वादेः अभावत्वाभावात्, साध्य-वद्भिन्नवृत्तिघटाभावादेस्तु हेतुमति असत्त्वात्,अधिकरणभेदेनाभावभेदादिति वाच्यम् । यत्र प्रतियोगिसमानाधिकरणत्व प्रतियोगिव्यधिकरणत्वलक्षण विरुद्धधर्माध्यासः-तत्रैवाधिकरणभेदेनाभावभेदाभ्युपगमो नतुसर्वत्र , तथाचसाध्यवद्भिन्नवृत्तिघटाभावादे-र्हेतुमत्यपि सत्त्वादसंभववारणाय साध्यपदोपादानात्। यद्वाघटाकाशसंयोग घटत्वा-न्यतराभावाभावोऽतिरिक्त एव, घटकाशसंयोगादिनामननुगततया तथात्वस्य वक्तु-मशक्यत्वात्। घटत्वद्रव्यत्वाद्यभवाभावस्तु नातिरिक्तो घटत्वद्रव्यत्वादीनामप्यनुगतत्वात् । तथा च द्रव्यत्वादिकमादायासंभववारणायैव साध्यपदमिति प्राहुरित्यास्तां विस्तरः।

**माथुरीभास्करी**

तथापि = सप्तमपदार्थात्मकाभावस्यैवाधिकरणभेदेन भेद इति स्वीकृत्याभावदलस्य सार्थक्य-सम्पादने कृतेऽपि, घटाकाशेति = घटाकाशसंयोगश्च घटत्वं च घटाकाशसंयोगघटत्वे, तयोर्यदन्यतरत् तस्य योऽभावस्तद्वानित्यर्थः, गगनत्वादित्यादौ = गगनत्वादिसद्धेतौ, ननु गगनत्वादेः कथं सद्धेतुत्वमित्यत-अह घटानधिकरणेत्यादि, घटेत्यादि = घटस्यानधिकरणीभूतो यो देशस्तदात्मकोयोऽवच्छेदस्तेन, घटाकाशेत्यादि = घटाकाशयोर्यः संयोगस्तदभावस्य, गगने सत्त्वात् = आकाशात्मक हेत्वधिकरणे-वर्तमानत्वात्, सद्धेतुतया = सद्धेतुत्वसिद्धेः, अव्याप्तिः= अव्याप्ति दोषः प्रसज्यते । अव्याप्तिमेवसङ्गमयति साध्यवद्भिन्नेत्यादिना । साध्यवद्भिन्ने = साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदाधिकरणे घटे, वर्तमानस्य= घटे विद्यमानस्य, साध्याभावस्य= प्रकृतसाध्याभावस्य, घटाकाशसंयोगरूपस्य = घटाकाशयोर्यः संयोगः-तदात्मकस्य, गगनेऽपि= आकाशेऽपि,सत्त्वात्= वर्तमानत्वात्, तत्र = साध्याभावाधिकरणीभूतगगने, हेतोः= गगनत्वात्मकहेतोः, वर्तमानत्वात् ।

अस्यायमाशयः । भावात्मकाभावो यद्यधिकरणभेदेन नभिन्न इति स्वीक्रियेत तदा घटाकाशसंयोग घटत्वान्यतराभावस्य साध्यत्वे गगनत्वस्य हेतुत्वेचाव्याप्तिः। तथाहि हेत्वधिकरणगगने घटाधिकरणत्वशून्ये पटाद्यवच्छेदेन घटाकाशसंयोगस्य घटत्वस्यचासत्त्वात् अन्यतराभावसत्त्वे बाधकाभावात्सद्धेतुत्वं तस्य, तथाच प्रकृते साध्याभावो घटाकाश संयोगघटत्वान्यतराभावाभावः घटाकाशसंयोग स्वरूपोऽपि भवति । स च भावात्मकत्वादधिकरणभेदेन न भिन्नः । तथा च घटाकाशसंयोगात्मकसाध्याभावस्य साध्यवद्भिन्न-घटनिष्ठस्याधिकरणं गगनमपि तत्र गगनत्वहेतोः सत्त्वादिति ।

ननु तथापीत्यादिना दत्तमव्याप्तिदोषं वारयतां केषाञ्चिदुत्तरं प्रदर्श्य दूषयति नचेत्यादिना । साध्यवद्भिन्नेति = साध्यवद्भिन्नवृत्तित्वविशिष्टो यः साध्याभावस्तद्वत्त्वम् विवक्षितम् = साध्यवद्भिन्नसाध्याभाववत्पदेन वक्तव्यम् ।

अस्यायमाशयः।घटवृत्तित्वविशिष्टद्रव्यत्वस्याधिकरणं घट एव पटादिवृत्तित्वविशिष्टद्रव्यत्वादे-रधिकरणं पटादिरेवेति सिद्धान्तः । एवंच साध्यवद्भिन्नवृत्तित्वविशिष्टसाध्याभावस्य यदधिकरणं तद्वृत्तित्वमिति विवक्षायां, घटाकाशसंयोगघटत्वान्यतराभाववान् गगनत्वादित्यादौ नाव्याप्तिः । तथाहि साध्यवद्भिन्न घटवृत्तित्वविशिष्ट घटाकाशसंयोगात्मकसाध्याभावस्याधिकरणं घट एव, नतु गगनं तथाच साध्याभावा-धिकरणघटे गगनत्वात्मक हेतोरसत्त्वादिति ।

नचेत्यादिनोक्तमर्थं निराकर्तुं युक्तिंदर्शयति । साध्याभावेत्यादिना । साध्याभाव-पदवैयर्थ्यापत्तेः=लक्षणप्रविष्टस्य साध्याभावपदस्य निष्प्रयोजनत्वप्रसङ्गात् । ननु साध्याभावपदानुपदाने किंलक्षणं पर्यवस्यतीत्यत आह साध्यवदिति, साध्यवद्भिन्नेत्यादि = साध्यवद्भिन्नवृत्तित्वविशिष्टाधेयतानिरूपिता-धिकरणताश्रयावृत्तित्वस्यैव, सम्यक्त्वात् = निर्दुष्टत्वात् ।

अस्यायमाशयः। साध्याभावपदानुपादाने वह्निमद्भिन्नजलह्रदादिवृत्ति द्रव्यत्वादिमति पर्वतादौ धूमादिहेतोः सत्त्वात्प्रसक्तासंभववारणाय साध्याभावपदं निवेशनीयमिति पूर्वमुक्तं,साम्प्रतं साध्यवद्भिन्न-वृत्तित्वविशिष्टवद्वृत्तित्वमित्यस्य लक्षणत्वे साध्याभावपदाभावेऽपि नासम्भवः । साध्यवद्भिन्नजलह्रदादि-वृत्तित्वविशिष्टद्रव्यत्वाधिकरणत्वस्य जलह्रदादावेवसत्त्वेन पर्वतादावसत्त्वात् अतो लक्षणे साध्याभावपदवैयर्थ्यप्रसङ्गादतः साध्यवद्भिन्नवृत्तित्वविशिष्टसाध्याभाववदवृत्तित्वमिति वक्तुं न शक्यतेऽतो घटाकाशसंयोगघटत्वान्यतराभाववानित्यादावव्याप्तिर्दुर्वारैवेति ।

ननु तथापीत्यादिनोक्तमव्याप्तिदोषं निराकरोति'इतिचेन्ने'त्यादिना । इति चेन्न= अव्याप्तिरिति न वक्तव्यम्, तत्रैव हेतुमाहाभावाभावस्येत्यादिना । अभावाभावस्य= अभावस्य योऽभावस्तस्य, अतिरिक्तत्वमतेन= प्रतियोगि प्रतियोगितावच्छेदकत्वस्वरूपमनङ्गीकृत्य सप्तमपदार्थस्वरूपत्वमेवाङ्गीकुर्वतां मतेनैव, एतल्लक्षणकरणात्= साध्यवद्भिन्नसाध्याभाववदवृत्तित्वमिति लक्षणस्य प्रणयनात् । नन्वेवमपि प्रकृते कथमव्याप्तिवारणमित्यत आह 'तथा चेति' तथाच= अभावाभावस्यातिरिक्तत्वमतेनैतल्लक्षणकरणे, अधिकरणेति = अभावस्याधिकरणभेदेन भिन्नत्वाभ्युपगमात्, साध्यवद्भिन्ने = साध्यावत्त्वावच्छिन्नप्रतियोगिताक-भेदवति,

वर्तमानस्य=विद्यमानस्य, साध्याभावस्य= घटाकाशसंयोगघटत्वान्यतराभावाभावस्य, प्रतियोगि-व्यधिकरणस्य=प्रतियोगिस्वरूपतादृशान्यतराभावानधिकरणस्थितस्य, एतेनविशेषणेनास्याभावस्यगगन-निष्ठाभावतो वैलक्षण्यं सूच्यते। प्रतियोगिमति= तादृशान्यतरात्मक प्रतियोग्यधिकरणे, गगने = हेत्वधिकरणा-काशे, असत्त्वात्= अविद्यमानत्वात्, अव्याप्तेः = अव्याप्तिनामक दोषस्य, अभावात् = अप्रसक्तेः ।

अस्यायमाशयः । अधिकरणभेदेनाभावोभिन्नः,तथाऽभावाभावश्चातिरिक्त इति येषां मतं तेषांमतमाश्रित्यैवेदंलक्षणं कृतं, एवञ्च घटाकाशसंयोगघटत्वान्यतराभाववान् गगनत्वादित्यादौ, साध्यवद्भिन्नो घटः तत्रवर्तमानो यस्साध्याभावः घटाकाशसंयोगघटत्वान्यतराभावाभावः स च सप्तमपदार्थस्वरूपः अधिकरणभेदेनभिन्नश्चातस्तदधिकरणं घट एव न तु गगनं तथा च घटे गगनत्व -हेतोरसत्वान्नाव्याप्तिर्नवासाध्याभावपदवैयर्थ्यमिति ।

साध्याभावपदस्य वैयर्थ्याभावेऽपि साध्यपदस्य वैयर्थ्यं स्यादित्याशङ्क्य समाधत्ते 'नचैवमि'त्यादिना। एवम् = अभावाभावस्यातिरिक्तस्वरूपत्वं स्वीकृत्य साध्याभावपदस्य सार्थक्यसम्पादने, साध्याभावेत्यत्र-साध्यपदवैयर्थ्यम् = साध्याभावपदघटक साध्यपदस्य निष्प्रयोजनत्वम्, साध्यपदस्यवैयर्थ्यसम्पादक-हेतुमाहाभावेति, अभावाभावस्यातिरिक्तत्वेन = प्रतियोगि प्रतियोगितावच्छेदकातिरिक्तसप्तमपदार्थ-स्वरूपत्वेन, द्रव्यत्वादेः=द्रव्यत्वसत्त्वादेः,अभावत्वाभावात्= सप्तमपदार्थात्मकाभावस्वरूपत्वाभावात्, साध्यवद्भिन्नवृत्तिघटाभावादेस्तु = साध्यवद्धेदाधिकरणजलहृदादिवृत्ति घटपटाद्यभावस्य हेतुमति = धूमात्मकहेत्वधिकरणे पर्वतादौ, असत्त्वात् = अवृत्तेः, तत्रैव हेतुमाहाधिकरणेत्यादि, अधिकरण-भेदेन= आश्रयपार्थक्येन, अभावभेदात् = अभावस्यभिन्नत्वात् ।

अस्यायमाशयः । लक्षणे साध्यपदानुपादाने साध्यवद्भिन्नवृत्तिर्योऽभावस्तद्वद्वृत्तित्वमिति लक्षणं पर्यवस्यति। तथा च वह्निमान् धूमादित्यादौ वह्निमद्भिन्न जलहृदादिवृत्ति द्रव्यत्वाभावा-भावस्य द्रव्यत्वात्मकस्य पर्वतेऽपि सत्वात्तत्र हेतोःसत्त्वेन याऽव्याप्तिस्तद्वारणाय साध्यपदं निवेशनीय-मिति पूर्वमुक्तं,तदसंङ्गतम् । तथाहि एतन्मतेऽभावाभावोऽतिरिक्त एव तथाच साध्यवद्भिन्नवृत्ति द्रव्यत्वाभावा-भावो न द्रव्यत्वस्वरूपः, किन्तु सप्तमपदार्थस्वरूपः, स च अधिकरणभेदेनभिन्नश्च,स च पर्वतादौ नास्त्येव जलादौ वर्तमानस्य अन्यत्र सत्त्वायोगादतस्तदधिकरणं न पर्वतादिकं किन्तु हृदादिकमेव तत्रहेतोरसत्त्वादव्याप्तेरप्रसक्तेः । तथा च साध्यपदं व्यर्थमेवेति ।

नचैवं साध्याभावेत्यादिना दत्तं दोषं निराकर्तुं युक्तिंदर्शयति 'यत्रेत्यादिना'। यत्र = स्थलविशेषे, प्रतियोगिसमानाधिकरणत्वेत्यादि । प्रतियोगिसमानाधिकरणत्वं, प्रतियोगि व्यधिकरणत्वं च, लक्षणं = स्वरूपं, ययोः तौ विरुद्धधर्मौ प्रतियोगिसमानाधिकरणत्वप्रतियोगिव्यधिकरणत्व-लक्षणविरुद्धधर्मौ, तयोरध्यासः= आरोपः, तत्रैव = तादृशस्थल एव, अधिकरणभेदेन = आश्रयभेदेन, अभावभेदः= अभावपार्थक्यम् । न तु सर्वत्र = न सर्वेषु स्थलेषु, तथा च= अधिकरण भेदेन अभावभेदस्य सर्वत्रानभ्युपगमे,

साध्यवद्भिन्नेति = साध्यवद्भिन्नवृत्तिर्योघटाभावस्तस्य, हेतुमत्यपि = हेत्वधिकरणे पर्वतादौ, सत्त्वात् = वर्तमानत्वात्, अरांभववरणाय= असंभवनिराकरणाय, साध्यपदोपादानम् = साध्यपदनिवेशः।

अस्यायमाशयः सर्वोप्यभावोऽधिकरणभेदेन भिद्यत इत्युच्येत यदि तदा साध्यपदं व्यर्थं स्यात्। तदेव नोच्यते किन्तु प्रतियोग्यधिकरणे प्रतियोग्यनधिकरणे च वर्तते योऽभावः स एवाधिकरणभेदेन भिन्न इति स्वीक्रियते। एवञ्च साध्यपदानुपादाने वह्निमान् धूमादित्यादि सद्धेतुस्थलेऽसंभवः। तथाहि साध्यवद्भिन्ने जलहृदादौ वर्तमानो घटाद्यभावः प्रतियोग्यधिकरणे न वर्ततोऽतोऽधिकरणभेदेन न भिन्नस्तथाच तदधिकरणं पर्वतादिकमपि तत्र धूमादिहेतोः सत्त्वात्, अतोऽसंभववारणायैव साध्यपदमिति।

साध्यपदस्य वैयर्थ्यदोषं परिहर्तुं समाधानान्तरमाह 'यद्वेत्यादिना'। घटाकाशेत्यादि = घटाकाश-संयोग घटत्वान्यतराभावस्य साध्यीभूतस्य योऽभावः सः, अतिरिक्त एव = सप्तमपदार्थस्वरूपएव न प्रतियोग्यादिस्वरूपः, तस्य प्रतियोग्यनात्मकत्वे हेतुमाह घटाकाशेत्यादिना, घटाकाशसंयोगादीनाम् = घटाकाश पटाकाश संयोग विभागादीनाम्, अननुगततया = तत्तद्व्यक्तिभेदेन भिन्नतया, तथातस्य = अनुगत तादृशान्यतराभावाभावस्वरूपत्वस्य, वक्तुमशक्यत्वात्= कथनासंभवात्, घटत्वादीति = अनुगत घटत्वद्रव्यत्व सत्त्वाद्यभावाभावस्तु, नातिरिक्तः = न सप्तमपदार्थ स्वरूपः, घटत्वेत्यादि =घटत्वद्रव्यत्व-सत्त्वादीनाम्, अनुगनत्वात् = व्यक्तिभेदेन भेदाभावात्, तथा च =घटत्व द्रव्यत्वाभावाभावादेरतिरिक्त-स्वरूपत्वमनङ्गीकृत्य घटत्वादिस्वरूपाभ्युपगमे, द्रव्यत्वादिकमादाय = साध्यवद्भिन्नवृत्त्यभावपदेन द्रव्यत्वादिस्वरूपाभावं गृहीत्वा, असंभववारणायैव = प्रसक्तासंभवदोषवारणायैव, साध्यपदमिति = साध्यपदं लक्षणे निवेशनीयमिति।

यद्वेत्यादेरयमाशयः। सर्वत्राधिकरणभेदेनाभावात्मकाभावोभिद्यत एव तथापि अभावाभावः सर्वत्र नातिरिक्तःकिन्तु यत्र प्रतियोगि प्रतियोगितावच्छेदकं वा नानुगतं व्यक्तिभेदेन भिन्नं तत्रैवाभावा-भावोऽतिरिक्तो न तु अन्यत्रेति स्वीक्रियते। तथाच साध्यपदानुपादानेऽसंभवः। तथाहि, वह्निमान् धूमादित्यादिस्थले साध्यवद्भिन्नजलहृदादिवृत्ति द्रव्यत्वाभावाभावो नातिरिक्तः, प्रतियोगिनोऽनुगतत्वात्, किन्तु द्रव्यत्वादिरूपस्तथाच तदधिकरणे पर्वतादौ हेतोः सत्त्वादसंभवः। अतस्तद्वारणाय लक्षणे साध्यपदं निवेशनीयमेवं च द्रव्यत्वाभावाभावस्य साध्याभावत्वाभावात्तमादाय नासंभवो दातुं शक्यत इति।

## द्वितीय लक्षण व्याख्या समाप्ता।

# अथ तृतीय लक्षणम् ।

## चिन्तामणि :

### साध्यवत्प्रतियोगिकान्योन्याभावासामानाधिकरण्यम् ।

**माथुरीभास्करी**

लक्षणान्तरमपि व्याख्याति हेतौ साध्यवत्प्रतियोगिकेत्यादिना ।

**माथुरी**

**हेतौ साध्यवत्प्रतियोगिकान्योन्याभावाधिकरणवृत्तित्वाभाव इत्यर्थः। अन्योन्याभावश्च प्रतियोग्यवृत्तित्वेनविशेषणीयस्तेन साध्यवतो व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाववतिहेतोर्वृत्तावपि नासंभवः। नन्वेवमपि नानाधिकरण-साध्यके वह्निमान् धूमादित्यादौ साध्याधिकरणीभूततत्तद्व्यक्तित्वावच्छिन्न-प्रतियोगिताकान्योन्याभाववति हेतोर्वृत्तेरव्याप्तिदुर्वारेति प्रतियोग्यवृत्तित्व-मपहाय साध्यवत्त्वावच्छिन्नप्रतियोगिताकान्योन्याभावविवक्षणे तु पञ्चमेन सह पौनरुक्त्यापत्तिः ।**

**माथुरीभास्करी**

हेतौ=हेतुत्वेनाभिमते धूमादौ,सप्तम्या निष्ठत्वमर्थः, साध्यवत्प्रतियोगिकेत्यादि= साध्यवत्प्रतियोगिको योऽन्योन्याभावः साध्यावान्नेत्याकारकस्तधिकरणवृत्तित्वाभावः, इत्यर्थः= इत्येतादृशार्थः साध्यवत्प्रतियोगिकेत्यादिग्रन्थस्य पर्यवस्यतीति भावः । हेतुनिष्ठो यः साध्यवत्प्रतियोगिकान्योन्याभावाधिकरणवृत्तित्वाभावः स एव व्याप्तिरिति परमार्थः ।

अस्यायमाशयः । कपिसंयोग्येतद्वृक्षत्वादित्यादौ साध्यीभूतकपिसंयोगवद्भेदाधिकरणं न वृक्षः भेदस्यव्याप्यवृत्तित्वात्, किन्तु गुणादिस्तत्र हेतोरसत्त्वेन नाव्याप्तिः । तथा अस्मिन् लक्षणे अधिकरणभेदनाभावभेदाभ्युपगमोऽपि नावश्यकः अभावाभावस्यातिरिक्तत्वमपि नाभ्युपेयमतोनापसिद्धान्तादिदोषप्रसक्तिरिति ।

ननु कपिसंयोग्येतद्वृक्षत्वादित्यादौ पूर्वोक्तदोषाभावेऽपि प्रकारान्तरेणाऽसंभवदोषः स्यादितिमत्वा तद्वारणरीतिं दर्शयति । 'अन्योन्याभावश्चेति' । अन्योन्याभावश्च= लक्षणघटकान्योन्याभावः, प्रतियोग्यवृत्तित्वेनविशेषणीयः = प्रतियोग्यवृत्तित्वात्मकविशेषणविशिष्टो विधेयः, तेन = लक्षणघटकान्योन्याभावे प्रतियोग्यवृत्तित्वविशेषणदानेन, साध्यवतः = साध्यीभूत-

वह्न्यादिमतः,षष्ठ्याः निष्ठत्वमर्थः अस्य प्रतियोगितायामन्वयः,व्यासज्यवृत्तीत्यादि , व्यासज्य-वृत्तिधर्मः= एकत्वानवच्छिन्नपर्याप्तिको यो धर्मः एकत्वातिरिक्तद्वित्वादिरूपो धर्म इति यावत्, तदवच्छिन्नप्रतियोगिताकोयोऽन्योन्याभावः तद्वति पर्वतादौ, हेतोर्वृत्तावपि = धूमादिरुपहेतोः सत्त्वेऽपि, नासंभवः = असंभव दोषो न भवति।

अस्यायमाशयः । साध्यवत्प्रतियोगिकान्योन्याभावाधिकरणनिरूपितवृत्तित्वाभावो व्याप्तिरिति फलितमेवंच वह्निमान् धूमादित्यादावसंभवः। तथाहि साध्यवत्प्रतियोगिको योऽन्योन्याभावः वह्निमज्जलोभयंनेत्याद्याकारकः तदधिकरणं पर्वतादिकमपि तत्र वह्नेस्सत्त्वेऽपिजलाभावात् 'एकसत्त्वेऽपिद्वयंनास्ती'तिन्यायात् तत्र हेतोः सत्त्वादसम्भवः । अतस्तद्वारणाय प्रतियोग्य-वृत्तित्वविशेषणमभावे निवेशनीयमेवञ्च वह्निमज्जलोभयंनेत्याद्याकारकाभावस्य स्वप्रतियोगि वह्निमति पर्वतादावपि सत्त्वेन तस्य लक्षणघटकत्वाभावात् अन्योन्याभावपदेन वह्निमान्नेत्याद्या-कारकाभावस्यैव ग्रहणसंभवात्तद्वति जलहृदादौ हेतोरसत्त्वेन नासंभव इति।

प्रतियोग्यवृत्तित्वविशेषणेन पूर्वोक्तदोषवारणेऽपि प्रकारान्तरेण वह्निमान् धूमादित्यादा-वव्याप्तिरित्याशङ्कते 'ननु एवमपीत्यादिना' । एवमपि= प्रतियोग्यवृत्तित्वविशेषणेन व्यासज्यवृत्ति-धर्मात्मक द्वित्वाद्यवच्छिन्नाभावमादाय प्रसक्तासंभववारणेऽपि,नानाधिकरणसाध्यके ,नाना = अनेकम्, अधिकरणम् = आश्रयो यस्य साध्यस्य नानाधिकरणम्,तत् साध्यं यस्य तत् नानाधिकरणसाध्यकं तत्र, वह्निमान् धूमादित्यादौ=वह्निमान् धूमात्,रूपवान् पृथिवीत्वा-दित्यादि सद्धेतुस्थले, साध्याधिकरणीभूतेत्यादि=साध्याधिकरणीभूता या तत्तद्व्यक्तिः तत्त्वावच्छिन्न-प्रतियोगिताको योऽन्योन्याभावः=वह्निमात्पर्वतो न, वह्निमन्महानसोनेत्याद्याकारकः, तद्वति पर्वतचत्वरादौ,हेतोर्वृत्तेः=धूमादिरुपहेतोः सत्त्वात्,अव्याप्तिः दुर्वारेति= अव्याप्तिदोषस्यवारणा-संभवाद्धेतोः,प्रतियोग्यवृत्तित्वमपहाय=अन्योन्याभावे प्रतियोग्यवृत्तित्वविशेषणमनिवेश्य, साध्यवत्त्वेत्यादि= अन्योन्याभावपदेन साध्यवत्त्वावच्छिन्नप्रतियोगिताकान्योन्याभावएव ग्राह्य इत्युक्तौ,पञ्चमेन सह = साध्यवदन्यावृत्तित्वमिति यत्पञ्चमं लक्षणं तेन सह, पौनरुक्त्यम् = समानार्थकत्वम्।

अस्यायमाशयः। द्वित्वाद्यात्मकव्यासज्यवृत्तिधर्मावच्छिन्नाभावस्य प्रतियोगिन्यपिसत्त्वेन प्रतियोग्यवृत्तित्वविशेषणेन तस्य ग्रहणासंभवेऽपि तत्तद्व्यक्तिप्रतियोगिकान्योन्याभावमादाय वह्निमान् धूमादित्यादावव्याप्तिस्तथाहि । साध्यवत्प्रतियोगिकः प्रतियोग्यवृत्तिश्च योऽन्योन्याभावः वह्निमन्महानसो न,वह्निमत्पर्वतोनेत्याद्याकारकः तद्वान् पर्वतमहानसादिः पर्वतभेदस्य महानसे महानसभेदस्य पर्वतादौ सत्त्वात् तत्र धूमाद्यात्मक हेतोः सत्त्वात् । अतस्तद्वारणाय साध्यवत्प्रतियोगिकान्योन्याभावपदेन साध्यवत्त्वमात्रावच्छिन्नप्रतियोगिताकान्योन्याभाव एव ग्राह्य इत्युक्तौ यद्यपि व्यासज्यवृत्ति धर्मावच्छिन्नाभावं तत्तद्व्यक्तित्वावच्छिन्नाभावञ्चादायनासंभवोनवाऽव्याप्तिः तदभावद्वयस्य साध्यवत्त्वमात्रा-वच्छिन्नप्रतियोगिताकाभावत्वाभावात्। एवञ्च प्रतियोग्यवृत्तित्वविशेषणमभावे न निवेशनीयं प्रयोजनाभावात्। तथापि

पञ्चमलक्षणेन सह पौनरुक्त्यापत्तिर्दुर्वारैव । पञ्चमलक्षणस्यापि साध्यावत्त्वमात्रावच्छिन्न-प्रतियोगिताकान्योन्याभावाधिकरणनिरूपितवृत्तित्वाभावार्थकत्वादतोनैतल्लक्षणं समुचितमिति ।

नन्वेवमपीत्यादिनोक्तदोषं परिहरति 'इतिचेन्नेत्यादिना '।

**माथुरी**

**इतिचेन्न । वक्ष्यमाण केवलान्वयिन्यव्याप्तिवदस्याप्यत्रदोषत्वात् । न च तथापि साध्यवत्प्रतियोगिकान्योन्याभावमात्रस्यैवेतल्लक्षणघटकत्वे वक्ष्यमाण केवलन्वयिन्यव्याप्तिरत्रासङ्गता, केवलान्वयिसाध्यकेऽपि साध्याधिकरणीभूत तत्त-द्व्यक्तित्वावच्छिन्नप्रतियोगिताकान्योन्याभावस्य प्रसिद्धत्वादिति वाच्यम् । तत्रापि तादृशान्योन्याभावस्यप्रसिद्धत्वेऽपि तद्वति हेतोर्वृत्तेरेवाव्याप्तेर्दुर्वारत्वात् ।**

**माथुरीभास्करी**

इति चेन्न = उभयथाऽपिदोषावारणादुक्तलक्षणमसङ्गतमिति न वक्तव्यम्, तत्र हेतुमा वक्ष्यमाणेत्यादिना, वक्ष्यमाण केवलान्वयिनि=इदं वाच्यं ज्ञेयत्वादित्यादि केवलान्वयिसाध्यक स्थले, अव्याप्तिवत्=अव्याप्तिदोष इव, अस्यापि= लक्षणागमनस्यापि, अत्र= तृतीयलक्षणे, दोषत्वात्=दोषत्वाभ्युपगमात् ।

अस्यायमाशयः । अत्र लक्षणे साध्यवत्प्रतियोगिकान्योन्याभावपदेन प्रतियोग्यवृत्ति-साध्यवन्निष्ठप्रतियोगिताकान्योन्याभाव एव ग्राह्यो न साध्यवत्त्वमात्रावच्छिन्नप्रतियोगिताका-न्योन्याभावः। एवंच पञ्चानां लक्षणानामाव्याप्तिदोषोऽस्तीति यथा स्वीक्रियते तथा तृतीयलक्षणे नानाधिकरण साध्यकस्थलेऽपरोऽव्याप्तिदोषोऽपि स्वीक्रियते। तथाच न पञ्चमेन पौनरुक्त्यमिति ।

लक्षणे साध्यवन्निष्ठप्रतियोगिताकान्योन्याभावमात्रस्य प्रवेशे वक्ष्यमाण ग्रन्थविरोधः स्यादित्याशङ्क्य समाधत्ते ।'न च तथापीत्यादिना' । तथापि= पञ्चमेन सह पुनरुक्तिदोषवारणेऽपि, साध्यवत्प्रतियोगिकेत्यादि=साध्यावन्निष्ठप्रतियोगिताकाभावस्यैव, एतल्लक्षणघटकत्वे= तृतीय-लक्षणेप्रवेशे, वक्ष्यमाण केवलान्वयिन्यव्याप्तिः = इदं वाच्यं ज्ञेयत्वात्, प्रमेयवान् वाच्यत्वादित्यादि-केवलान्वयिसाध्यकस्थले वक्ष्यमाणाव्याप्तिदोषः, अत्र=तृतीयलक्षणे, असङ्गतः= न संभवति, अव्याप्त्यसङ्गतौ हेतुमाह केवलान्वयीति=अत्यन्ताभावाप्रतियोगिरूपं यत्केवलान्वयि, तत्साध्यकस्थलेऽपि, साध्याधिकरणीभूतेत्यादि=साध्याधिकरणीभूता या व्यक्तिःतत्त्वावच्छिन्न-प्रतियोगिताकान्योन्याभावस्य वाच्यत्ववत्पटो न, प्रमेयवद्घटोनेत्याकारकस्य, प्रसिद्धत्वात्= घटपटादौ सत्त्वात्, इति वाच्यम् = एवं न वक्तव्यमिति भावः ।

अस्यायमाशयः। पञ्चसु लक्षणेषु मध्ये लक्षणत्रयं साध्यात्यन्ताभावघटितं लक्षणद्वयन्तु साध्यवत्प्रतियोगिकान्योन्याभावघटितं, एवञ्च प्रमेयवान् वाच्यत्वादित्यादौ प्रमेयात्यन्ताभावस्य प्रमेयवत्प्रतियोगिकान्योन्याभावस्य चाप्रसिद्धत्वादेव तद्घटितलक्षणानामप्यप्रसिध्याऽव्याप्तिरित्यवोचन्मणिकारः, 'केवलान्वयिन्यभावादि'त्यादिना । तथाचैतल्लक्षणे साध्यवत्प्रतियोगिकान्योन्याभावमगृहीत्वा साध्यवन्निष्ठप्रतियोगिताकाभावमात्रस्य ग्रहणे प्रमेयवान् वाच्यत्वादित्यादौ प्रमेयवज्जलाद्यन्योन्याभावस्य पटादावेव प्रसिद्धत्वेन तादृशाभावाप्रसिद्धिप्रयुक्ताव्याप्ति र्नभवतीति तादृश चिन्तामणिग्रन्थविरोधः स्यादिति साध्यवत्प्रतियोगिकान्योन्याभावपदेन साध्यवन्निष्ठप्रतियोगिताकान्योन्याभावमात्रस्य ग्रहणं नोचितमिति ।

न च तथापीत्यादिनोक्तं दोषं निरसितुं युक्तिंदर्शयति 'तत्रापी'त्यादिना । तत्रापि= तृतीयलक्षणेऽपि, तादृशान्योन्याभावस्य=साध्यवन्निष्ठप्रतियोगिताकान्योन्याभावस्य, प्रसिद्धत्वेऽपि= व्यक्त्यन्तरे सत्त्वेऽपि, तद्वति=साध्यवन्निष्ठप्रतियोगिताकान्योन्याभाववति, हेतोः = वाच्यत्वादिरूपहेतोः, वृत्तेः = सत्त्वेन, अव्याप्तेः = अव्याप्तिदोषस्य, दुर्वारत्वात् = अनिवार्यत्वात् ।

अस्यायमाशयः। केवलान्वयिन्यभावादित्यनेन यद्यपि पञ्चस्वपि लक्षणेष्वव्याप्तिर्विवक्षिता मणिकारेण । तथापि साध्याभावाप्रसिध्यैवाव्याप्तिर्विवक्षितेति कथने प्रमाणं नास्ति । साध्याभाववति हेतोः सत्त्वेनापि अव्याप्तेः सङ्गमयितुं शक्यत्वात् । तथा च प्रमेयवान्वाच्यत्वादित्यादौ प्रमेयवज्जलादिप्रतियोगिकाभावस्य प्रसिद्धत्वेऽपि तद्वति घटादौ वाच्यत्वादिहेतोस्सत्त्वेनाव्याप्तेस्संभवात् वक्ष्यमाणा-व्याप्तेः सङ्गतत्वेन मणिग्रन्थेन विरोधाभावात्साध्यवत्प्रतियोगिकान्योन्याभावपदेन साध्यवन्निष्ठप्रतियोगिकान्योन्याभावमात्र विवक्षिणेऽपि न कोऽपि दोष इति ।

नानाधिकरणसाध्यकेत्यादिना ग्रन्थेनोक्तस्य दोषस्य प्रकारान्तेरणोत्तरं ददाति 'यद्वेत्यादिना '।

**माथुरी**

**यद्वा साध्यवत्प्रतियोगिकान्योन्याभावपदेन साध्यवत्त्वावच्छिन्नप्रतियोगिका-न्योन्योन्याभाव एव विवक्षितः, न चैवं पञ्चमाभेदः, तत्र साध्यवत्त्वावच्छिन्न-प्रतियोगिताकान्योन्याभाववत्त्वेन प्रवेशः, अत्र तु, तादृशान्योन्याभावाधिकरणत्वेन, इत्यधिकरणत्वप्रवेशाप्रवेशाभ्यामेव भेदात् । अखण्डाभावघटकतया च नाधिकरणत्वांशस्य वैयर्थ्यमिति नकोऽपि दोष इति दिक् ।**

**माथुरीभास्करी**

साध्यवदित्यादि=लक्षणघटक साध्यवत्प्रतियोगिकान्योन्याभावपदेन, साध्यवत्त्वेत्यादि= साध्यवत्त्वमात्रावच्छिन्नप्रतियोगिकोयो ऽन्योन्याभावः स एव, विवक्षितः= बोधितः, नन्वेवं पञ्चमेन

सद्धाभेदस्तदवस्थ एवेत्यत आह न चैवमित्यादिना, एवम्= साध्यवत्प्रतियोगिकान्योन्याभाव-पदेन साध्यवत्त्वावच्छिन्नप्रतियोगिताकाभावस्य विवक्षणे,न पञ्चमभेदः= साध्यवदन्यावृत्तित्वा-त्मक पञ्चमलक्षणेन सहैक्यं नास्तीति भावः।ऐक्याभावे हेतुमाह तत्रेत्यादिना,तत्र= पञ्चमलक्षणे, साध्य-वत्त्वेत्यादि=साध्यवत्त्वावच्छिन्नप्रतियोगिताको योऽन्योन्याभावस्तद्धत्वेन,प्रवेशः= साध्यवत्त्वा-वच्छिन्नप्रतियोगिताकान्योन्याभावस्यनिवेशः,अत्र तु =तृतीय लक्षणे तु, तादृशान्योन्याभावा-धिकरणत्वेन=साध्यवत्त्वावच्छिन्नप्रतियोगिताकान्योन्याभावाधिकरणत्वेन, तादृशाभावस्य प्रवेशः कृतइति हेतोः, अधिकरणत्वप्रवेशाप्रवेशाभ्यामेव=अधिकरणतात्वेनाधिकरणत्वस्य प्रवेशाप्रवेशाभ्यामेव, भेदात्= भिन्नत्वात्।

अस्यायमाशयः।साध्यवन्निष्ठप्रतियोगिताकान्योन्योभावस्य निवेशे नानाधिकरणसाध्यक-स्थलेत्वेको दोषः।केवलान्वयिसाध्यकस्थलेऽपि साध्यवत्प्रतियोगिकाभावप्रसिद्ध्या चिन्तामणि-ग्रन्थासङ्गतिरूपोऽपरो दोषः इति वदतां तुष्यतु दुर्जन न्यायेन सन्तोषमुत्पादयितुं साध्यवत्प्रतियोगिका-न्योन्याभावपदेन साध्यवत्त्वाच्छिन्नप्रतियोगिताकान्योन्याभाव एव विवक्षितः, तथा च नाना-धिकरणसाध्यकस्थले तत्तद्व्यक्तिमत्प्रतियोगिकान्योन्याभावस्य महानसवह्न्याद्यात्मक तत्तद्व्यक्ति-मत्त्वावच्छिन्नप्रतियोगिताकत्वेन वह्निमत्वावच्छिन्नप्रतियोगिताकत्वाभावेन तस्य लक्षणघटकत्वा-संभवात्तमादायनाव्याप्तिः।वह्निमज्जलोभयं नेत्याद्याकारकस्य व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताका-भावस्यापि वह्निमत्त्वावच्छिन्नप्रतियोगिताकत्वाभावात् तस्य लक्षणाऽघटकत्वेन तमादायापि नासंभवः। तथाच प्रतियोग्यवृत्तित्वविशेषणमपि नोपादेयमस्मिन् पक्षे। तथा केवलान्वयि साध्यक-स्थले साध्याभावस्य साध्यवत्प्रतियोगिकान्योन्याभावस्यवाऽप्रसिद्ध्यैवाव्याप्तिरभिमता मणिकारस्येति वदतां मतेऽपि नासङ्गतिः। साध्यवत्त्वावच्छिन्नप्रतियोगिताकस्य प्रमेयवान्नेत्याद्याकारस्याप्रसिद्धत्वात्। पञ्चमलक्षणेन सहैक्यमपि न प्रसज्यते तत्र साध्यवत्त्वावच्छिन्न प्रतियोगिताकान्योन्याभावाधिकरणतात्वेन तादृशाधिकरणताया अप्रवेशात् अत्र तृतीय लक्षणे तादृशाधिकरणतात्वेनाधिकरणतायाः प्रविष्टत्वेनोभयोरत्यन्तं भिन्नत्वात्तथा च न कोप्यत्र दोष इति।

ननु तृतीयलक्षणे पूर्वोक्तानां सर्वेषां दोषाणां वारणेऽपि तादृशाधिकरणतात्वेनाधिकरणतायाः प्रवेशे वैयर्थ्यं स्यादित्यत आहाखण्डाभावघटकतयेत्यादि। अखण्डाभावघटकतया= पञ्चमलक्षण-घटकाभावतोऽत्यन्तंविलक्षणस्यैवाभावस्यैतल्लक्षणेप्रविष्टत्वेन,लक्षणस्वरूपत्वेनेति यावत्, अधिकरणत्वांशस्य= अधिकरणत्वदलस्य,न वैय्यर्थम् = न व्यर्थतेति कोपि दोषो नास्तीति भावः।

अस्यायमाशयः। स्वसमानाधिकरण प्रकृतसाध्यव्याप्यतावच्छेदकधर्मान्तरघटितत्वं वैय्यर्थम्। तथा च साध्यवत्त्वाच्छिन्नप्रतियोगिताकान्योन्याभावाधिकरणवृत्तित्वाभावे साध्यवत्त्वावच्छिन्न-प्रतियोगिताकान्योन्याभाववद्वृत्तित्वाभावत्वं यदि प्रविष्टं स्यात् तदा वैयार्थ्य प्रसक्तिः। तदेव न प्रविष्टं

साध्यवत्त्वावच्छिन्नप्रतियोगिताकान्योन्याभावाधिकरण वृत्तित्वाभावस्याखण्डस्यैव प्रविष्टत्वा-त्तथाच तद्घटितत्वस्यैवाभावान्नवैयर्थ्यमिति ।

तृतीय लक्षण व्याख्या समाप्ता ।

## अथ चतुर्थ लक्षणम् ।

### चिन्तामणिः

सकलसाध्याभाववन्निष्ठाभावप्रतियोगित्वम् ।

### माथुरीभास्करी

लक्षणान्तरमपि व्याकर्तुमुपक्रमते मथुरानाथः 'साकल्यमित्यादिना' ।

### माथुरी

साकल्यं साध्याभाववतो विशेषणम् । तथाच यावन्ति साध्याभावाधिकरणानि तन्निष्ठाभावप्रतियोगित्वं हेतोर्व्याप्तिरित्यर्थः । धूमाभाववज्जलह्रदादिनिष्ठाभाव-प्रतियोगित्वाद्वह्न्यादावतिव्याप्तिरिति यावदिति साध्याभाववतो विशेषणम् । साध्याभावविशेषणत्वे तत्तद्ह्रदावृत्तित्वरूपेण यो वह्न्याद्यभावः तस्यापि सकल साध्याभावत्वेन प्रवेशात् तावदधिकरणाप्रसिध्याऽसंभवापत्तेः ।

### माथुरीभास्करी

साकल्यम्=लक्षणप्रविष्टसकलत्वं, साध्याभाववतोविशेषणम्=साध्याभावाधिकरणस्य विशेषणम् । एवञ्च किं फलितमित्यत आह तथाचेत्यादि, तथा च= सकलपदार्थस्य साध्याभावव-त्पदार्थे विशेषणत्वे, यावन्ति= यावत्संख्याकानि, साध्याभावाधिकरणानि= साध्याभावाश्रयाणि, तन्निष्ठाभाव प्रतियोगित्वम्= साध्याभावाधिकरणेषु सर्वेषु वर्तमानो योऽभावस्तत्प्रतियोगित्वम्, हेतोर्व्याप्तिः=हेतुनिष्ठव्याप्ति पदार्थः। लक्षणान्तर्गतयावत्पदस्य प्रयोजनमाह 'धूमाभावेत्यादिना'। साध्याभावात्मको यो धूमाभावस्तद्वान् यो जलह्रदादिस्तद्वृत्त्यभावप्रतियोगित्वस्य वह्नौ सत्त्वात् । वह्न्यादौ=धूमवान् वह्नेरित्यादिस्थलीयवह्न्यादिहेतौ, अतिव्याप्तिरिति=अतिव्याप्तिदोषः प्रसज्यतइति हेतोः, यावदिति=यावत्पदार्थः, साध्याभाववतो विशेषणम्=साध्याभावाधिकरणस्य विशेषणम् ।

अस्यायमाशयः । सकलसाध्याभाववन्निष्ठाभावप्रतियोगित्वमिति लक्षणं । सकलानि च तानि साध्याभाववन्ति सकलसाध्याभाववन्तीति कर्मधारयस्ततस्तेषु निष्ठा वृत्तिर्यस्येति बहुव्रीहिः ततः स चासावभावश्चेति कर्मधारये सकलसाध्याभाववन्निष्ठाभाव इति पर्यवस्यति तत्प्रतियोगित्व-मिति लक्षणार्थः । सकलपदस्य यावत्त्वमर्थःतच्च साध्याभाववत्पदार्थस्य विशेषणम्, साध्याभाववत्पदार्थः साध्याभावाधिकरणं तथा च यद्यत्साध्याभावाधिकरणं तद्वृत्त्यन्यन्ताभावप्रतियोगित्वं -व्याप्तिरितिफलितं , एवं च वह्निमान् धूमात् इत्यादौ साध्यीभूत वह्न्यभावाधिकरणेषु सर्वेष्वपि धूमाभावस्य सत्त्वेन

तत्प्रतियोगित्वस्य धूमे सत्त्वाल्लक्षण समन्वयः। अत्र लक्षणे सकलपदानुपादाने साध्याभावाधिकरणवृत्त्यभावप्रतियोगित्वमित्येव लक्षणं पर्यवस्यति । तथाच धूमवान् वह्नेः इत्यादौ साध्यीभूतधूमाभावाधिकरणे जलह्रदादौ वह्न्यभावस्य सत्त्वेन तत्प्रतियोगित्वस्य वह्नौ सत्त्वादतिव्याप्तिरतस्तद्वारणाय लक्षणे सकलपदम् । तन्निवेशे तु यावत्साध्याभावाधिकरणनिष्ठाभावप्रतियोगित्वस्यैव लक्षणत्वेन यावत्साध्याभावाधिकरणान्तर्गतेऽयोगोलके वह्न्यभावस्य असत्त्वेन तत्प्रतियोगित्वस्य वह्नावसत्त्वान्नातिव्याप्तिरिति ।

ननु साध्याभावे साध्याभावाधिकरणे वा साकल्यविशेषणदाने धूमवान् वह्नेरित्यादावतिव्याप्ति-र्वार्यते । तथाच प्रथमोपस्थितसाध्याभावे साकल्यविशेषणमनिवेश्य पश्चादुपस्थितसाध्याभावा-धिकरणे तन्निवेशनं नोचितमित्यत आह 'साध्याभावेत्यादिना' । साध्याभावविशेषणत्वे= प्रथमोपस्थित-साध्याभावे साकल्यविशेषणोपादाने, तत्तद्ह्रदेत्यादि = ह्रदादितत्तद्व्यक्तिवृत्तित्वविशिष्टइत्यर्थः तृतीयाविभिक्तेर्विशिष्टार्थकत्वात् ,यो वह्न्याद्यभावः=वह्न्यादिस्वरूपसाध्यस्य योऽभावः, तस्यापि=तत्तद्ह्रदावृत्तित्वरूपेण वह्न्यभावस्यापि,सकलसाध्याभावत्वेन=यावत् साध्याभावमध्य-पतित्वेन,प्रवेशात्=लक्षणघटक साध्याभावे प्रविष्टत्वात्, तावदधिकरणाप्रसिध्या, तावताम्= तत्तद्ह्रदाद्यवृत्तित्वविशिष्टानां सर्वेषां वह्न्याद्यात्मकसाध्याभावानां,अधिकरणाप्रसिद्ध्या= एकस्या-धिकरणस्याप्रसिद्धत्वेन,असंभावापत्तेः=असंभवदोषप्रसङ्गत् । तथाच साध्याभावे नोपादेयमिति भावः ।

अस्यायमाशयः साध्याभावे साकल्यविशेषणदाने धूमवान् वह्नेरित्यादौ यद्यपि नातिव्याप्तिः घटपटादि तत्तद्व्यक्त्यवृत्तित्वविशिष्टानां सर्वेषां धूमाभावनामपि यावत्साध्याभावन्तर्गतत्वेन तेषां सर्वषामेकत्र स्थितेरसंभवेन तावदधिकरणस्यैवाप्रसिद्धेः । तथापि वह्निमान् धूमादित्यादि सद्धेतुस्थले-ष्वसंभवः पूर्वोक्तरीत्या ह्रदादि तत्तद्व्यक्त्यवृत्तित्वविशिष्टानां साध्यात्मकवह्न्याद्यभावानामपि तद्धदावृत्तिर्नास्ति इत्यादीनां यावत्साध्याभावन्तर्गतत्वेन तावतामभावानामेकाधिकरणाप्रसिद्धेः । तत्तद्व्यक्तिवृत्तित्वाविशिष्टस्य तत्तद्व्यक्तिंविहायान्यत्र सत्त्वायोगादत एव प्रथमोपस्थितस्यापि साध्याभावस्य साकल्यं विशेषणमिति नोक्तमिति ।

एतावता सकलसाध्याभाववन्निष्ठात्यन्ताभावप्रतियोगित्वं व्याप्तिरिति फलितमेवमपि द्रव्यं सत्त्वादित्यादावतिव्याप्तिः स्यादित्याशङ्क्य समाधत्ते न च द्रव्यं सत्त्वादित्यादिना ।

**माथुरी**

न च द्रव्यं सत्त्वादित्यादौ द्रव्यत्वाभाववति गुणादौ सत्त्वादेर्विशिष्टाभाव-सत्त्वादतिव्याप्तिरिति वाच्यम् । तादृशाभाव प्रतियोगितावच्छेदक हेतुतावच्छेदक-वत्त्वस्येह विवक्षितत्वात् ।

**माथुरीभास्करी**

द्रव्यं सत्त्वादित्यादौ = द्रव्यत्वसाध्यक सत्तादिहेतुक दुष्टहेतुकस्थले, द्रव्यत्वाभाववति = द्रव्यत्वाभावात्मकसकलसाध्याभावाधिकरणे, गुणादौ = गुणकर्मादौ, सत्त्वादेर्विशिष्टाभाव-सत्त्वात्=गुणकर्मान्यत्वविशिष्ट सत्तानिष्ठं यद् प्रतियोगित्वं तन्निरूपकाभावस्य सत्त्वादिति भावः।

अस्यायमाशयः। द्रव्यं सत्त्वादित्यादिस्थले साध्याभावो द्रव्यत्वाभावः तदधिकरणानि द्रव्य-भिन्नानि गुणादीनि तेषुयावत्सु वर्तमानोऽभावः गुणकर्मान्यत्वविशिष्टसत्ताभावस्तत्प्रतियोगित्वं विशिष्टसत्तायां वर्तते । तथाच विशिष्टं शुद्धान्नातिरिच्यतेति न्यायेन विशिष्टसत्तायाः शुद्धसत्ताया-श्चैक्यात् शुद्धसत्तायामपि प्रतियोगित्वमस्तीत्यतिव्याप्तिरिति ।

न च द्रव्यमित्यादि ग्रन्थेनोक्तमतिव्याप्तिदोषं वारयितुं युक्तिंदर्शयति 'तादृशाभावे-त्यादिना'। तादृशेति = सकलसाध्याभाववन्निष्ठाभावप्रतियोगितावच्छेदकीभूतं यद्धेतुतावच्छेदकं तद्वत्वस्य, इह =चतुर्थलक्षणे,विवक्षितत्वात् = तात्पर्यविषयत्वात् ।चतुर्थलक्षणस्य सकलसाध्याभाव-वन्निष्ठाभावप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणहेतुतावच्छेदकधर्मवत्त्वमेवार्थः। तथा च द्रव्यं सत्त्वादित्यादौ नातिव्याप्तिः,द्रव्यत्वाभावाधिकरण गुणादिनिष्ठ विशिष्टसत्ताभावप्रतियोगितावच्छेदकता-पर्याप्त्यधिकरणत्वस्य गुणकर्मान्यत्ववैशिष्टचसत्तात्वोभय धर्म एव सत्त्वेन हेतुतावच्छेदकीभूत केवल-सत्तात्वेऽसत्त्वादिति ।

सकलसाध्याभाववन्निष्ठाभावप्रतियोगितावच्छेदक हेतुतावच्छेदकधर्मवत्त्वस्य लक्षणत्वेऽपि तदवस्थैवातिव्याप्तिरिति विचिन्त्य दलान्तरं निवेशयति 'प्रतियोगिताचेत्यादिना '।

**माथुरी**

**प्रतियोगिता च हेतुतावच्छेदकसम्बन्धावच्छिन्ना ग्रह्या, तेन द्रव्यत्वाभाव-वति गुणादौ सत्तादेः संयोगादिसंबन्धावच्छिन्नाभाव सत्त्वेपि नातिव्याप्तिः ।**

**माथुरीभास्करी**

प्रतियोगिता = सकलसाध्याभाववन्निष्ठाभावप्रतियोगिता, हेतुतावच्छेदकसंबन्धा-वच्छिन्ना=हेतुतावच्छेदकत्वेनाभिमतो यस्सम्बन्धः तत्संबन्धावच्छिन्ना, तेन = सकलसाध्याभाव-वन्निष्ठाभावप्रतियोगितायां हेतुतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशनेन, सत्तादेः संयोग संबन्धा-वच्छिन्नाभावसत्त्वेपि= हेतुभूतसत्तानिष्ठ संयोगसंबन्धावच्छिन्न प्रतियोगितानिरूपकाभाव-सत्त्वेपि, नातिव्याप्तिः=अतिव्याप्तिदोषो न भवतीति भावः ।

अस्यायमाशय: । सकलसाध्याभाववन्निष्ठाभावप्रतियोगितावच्छेदकहेतुतावच्छेदक धर्मवत्त्वस्य लक्षणत्वेऽपि द्रव्यं सत्त्वादित्यादावतिव्याप्ति:। साध्याभावात्मक द्रव्यत्वाभावाधिकरणे सर्वत्र गुणादौ संयोगसम्बन्धेन सत्ताभावस्य सत्त्वेन तत्प्रतियोगितावच्छेदकत्वस्य हेतुतावच्छेदक-सत्तात्वे सत्त्वादतस्तत्रातिव्याप्तिवारणाय सकलसाध्याभाववन्निष्ठाभावप्रतियोगितायां हेतुतावच्छेदक-संबन्धावच्छिन्नत्वविशेषणमुपदेयमेवं च संयोगसम्बधेन सत्ताभावप्रतियोगितायाः लक्षणघटकत्वा-भावेन तामादाय नातिव्याप्तिः । हेतुतावच्छेदक समवायसंबन्धेन सत्ताभावो गुणदौ नास्त्येवेति तमादायापि नातिव्याप्तिर्दर्शयितुं शक्यत इति ।

सकलसाध्याभावाधिकरणनिष्ठाभावीयहेतुतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितावच्छेदकता-पर्याप्त्यधिकरणहेतुतावच्छेदकधर्मवत्त्वं व्याप्तिरिति पर्यवसितमेवमपि वह्निमान् धूमादित्यादावसंभवः स्यादित्याशङ्क्य समाधत्ते 'साध्याभावश्चेत्यादिना '।

**माथुरी**

साध्याभावश्च साध्यतावच्छेदकावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्न- प्रतियोगिताको ग्राह्य:। अन्यथा पर्वतादावपि वह्न्यादेर्विशिष्टाभावादि सत्त्वेन समवायादिसंबन्धावच्छिन्न वह्न्यादि सामान्याभावसत्त्वेन च यावदन्तार्गततया तन्निष्ठाभावप्रतियोगित्वाभावाद्धूमस्याऽसंभवः स्यात् ।

**माथुरीभास्करी**

साध्याभावश्च=चतुर्थलक्षणघटकीभूतसाध्याभावपदार्थश्च,साध्यतावच्छेदकावच्छिन्नसाध्यता-वच्छेदकसंबन्धावच्छिन्नप्रतियोगिताक:= साध्यतावच्छेदकधर्ममात्रावच्छिन्ना या साध्यतावच्छेदक-संबन्धावच्छिन्ना प्रतियोगिता तन्निरूपकाभाव:,ग्राह्य:=स्वीकार्य:,अन्यथा= लक्षणघटकाभावपदेन साध्यतावच्छेदकधर्मावच्छिन्नसाध्यातावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकाभावमगृहीत्वा केवलं येनकेनापि संबन्धेन साध्यनिष्ठप्रतियोगिताकाभावस्य ग्रहणे,पर्वतादावपि = हेतुभूत धूमा-धिकरणे पर्वतचत्वरादावपि,वह्न्यादेर्विशिष्टाभावादिसत्त्वेन = वह्निनिष्ठमहानसीय वह्नित्वावच्छिन्न-प्रतियोगिताकाभावस्य, वह्निनिष्ठ वह्नित्वजलत्वोभयाद्यवच्छिन्नाभावस्य च सत्त्वेन, साध्यतावच्छेदक-संबन्धावच्छिन्नस्यानिवेशे दोषमाह समवायादीति, समवायादिसंबन्धावच्छिन्नवह्न्यादिसामान्या-भावसत्त्वेन च=समवाय विषयित्वादिसंबन्धावच्छिन्नवह्नित्वमात्रावच्छिन्नप्रतियोगिताकाभावात्मको यो वह्न्याद्यभाव: तस्य सत्त्वेन च, यावदन्तर्गततया= पर्वतादेरपि यावत्साध्याभावधिकरणा-न्तर्गतत्वेन , तन्निष्ठाभावप्रतियोगित्वाभावात्= पर्वतादिनिष्ठाभावप्रतियोगित्वस्य अभावात्, धूमस्य = हेतुभूतधूमस्य, असंभव: = असंभवदोष प्रसङ्ग: ।

अस्यायमाशय:। लक्षणघटकसाध्याभावपदेन विशेषाभावो यदि गृह्येत तदा वह्निमान् धूमादित्यादावसंभव: महानसीयवह्न्याद्यभावस्यापि विशेषाभावत्वेन तदधिकरणपर्वतादेरपि यावत्साध्याभावाधिकरणान्तर्गतत्वात् तत्र हेतुभूतधूमाद्यभावस्यासत्त्वेन तन्निष्ठाभावप्रतियोगित्वस्य धुमे असत्त्वात्,यद्युभयाभावो गृह्येत तदापि वह्निमान् धूमादित्यादावसंभव एव वह्निजलोभयंनास्तीत्यभावस्यापि साध्याभावत्वेन तदधिकरणपर्वतादेरपि यावत्साध्याभावाधिकरणान्तर्गतत्वेन तत्र धूमाभावस्यासत्त्वात् योऽभावो वर्तते तत्प्रतियोगित्वस्य धूमादिहेतावसत्त्वात्, अतस्तत्र साध्याभाव पदेन साध्यसामान्याभाव एव ग्राह्य: । स च साध्यतावच्छेदकधर्ममात्रावच्छिन्नप्रतियोगिताकाभाव:। तथा साध्यतावच्छेदक संवन्धेनैव साध्यस्य सामान्याभावोग्राह्य:,अन्यथा समवायेनवह्निसामान्या-भावस्यापि लक्षणघटकत्वात् , तथा च तदधिकरण पर्वतादेर्यावत्साध्याभावाधिकरणान्तर्गतत्वेन तत्र धूमरूप हेत्वभावस्यासत्त्वात् तन्निष्ठोयोऽभावस्तत्प्रतियोगित्वस्य हेतावसत्त्वात् । अतोऽसंभव-वारणाय साध्यतावच्छेदकसंवन्धेन साध्यसामान्याभाव एव ग्राह्य:। एवं च महानसीयवह्न्याद्यभावस्य,वह्निजलोभयभावाद्यभावस्य,समवायादिसंवन्धेन वह्निसामान्याभावस्य च संयोगसंवन्धावच्छिन्नवह्नित्वमात्रावच्छिन्नप्रतियोगिताकाभावत्वाभावेन तेषां लक्षणाघटकत्वात्तानादाय नासंभव इति ।

एतावता साध्यतावच्छेदकसंवन्धावच्छिन्नसाध्यतावच्छेदकधर्ममात्रावच्छिन्न प्रतियोगिताकाभावाधिकरणयावन्निष्ठात्यन्ताभावप्रतियोगितावच्छेदकहेतुतावच्छेदकधर्मवत्त्वं व्याप्तिरिति फलितम् । एवमपि कपिसंयोग्येतद्वृक्षत्वादित्यदाव्याप्तिरित्याशङ्क्य विशेषणान्तरदानेन समाधत्ते । न च 'कपिसंयोगीत्यादिना' ।

**माथुरी**

न च कपिसंयोग्येतद्वृक्षत्वादित्यादावेतद्वृक्षस्यापि तादृश साध्याभाववत्त्वेन यावदन्तर्गततया तन्निष्ठाभावप्रतियोगित्वाभावादेतद्वृक्षत्वस्याव्याप्तिरिति वाच्यम्। किञ्चिदनवच्छिन्नाया:साध्याभावाधिकरणताया इह विवक्षितत्वात् । इत्थं च किञ्चिदनवच्छिन्नाया: कपिसंयोगाभावाधिकरणताया गुणादावेव सत्त्वात् तत्र हेतोरप्यभावसत्त्वान्नाव्याप्ति: ।

**माथुरीभास्करी**

कपिसंयोग्येतद्वृक्षत्वादित्यादौ = अव्याप्यवृत्तिसाध्यकैतद्वृक्षत्वादिसद्धेतुकस्थले, एतद्वृक्षस्यापि= हेत्वधिकरणैतद्वृक्षस्यापि, तादृशसाध्याभाववत्त्वेन=साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकधर्ममात्रावच्छिन्न प्रतियोगिताकाभावाधिकरणत्वेन, यावदन्तर्गततया=यावत्साध्याभावाधिकरणान्त:-

प्रविष्टत्वेन, तन्निष्ठाभावप्रतियोगित्वाभावात्=तादृशसाध्याभावाधिकरणैतद्वृक्षनिष्ठाभावप्रतियोगित्वस्या-सत्त्वात्, एतद्वृक्षत्वस्य = एतद्वृक्षत्वात्मक हेतोः, अव्याप्तिरिति = अव्याप्तिदोष प्रसङ्गः स्यादिति।

अस्यायमाशयः।परिष्कृतलक्षणे पूर्वोक्तदोषाणां वारणेऽपि कपिसंयोग्येतद्वृक्षत्वादित्याद्यव्याप्यवृत्ति-साध्यकसद्धेतावव्याप्तिः। तथाहि साध्यतावच्छेदकीभूतसमवायसंबन्धावच्छिन्न कपिसंयोगत्वावच्छिन्न-प्रतियोगिताकाभावात्मकसाध्याभावाधिकरणत्वं हेत्वाधिकरणीभूतैतद्वृक्षेप्यस्ति तत्र हेत्वभावो न वर्तते। तथा च तन्निष्ठाभावप्रतियोगित्वस्यैतद्वृक्षत्वात्मकहेतावसत्त्वादव्याप्तिरिति।

न च कपिसंयोगीत्यादिना दत्तं दोषं परिहर्तुं युक्तीर्दर्शयति किञ्चिदनवच्छिन्नेत्यादिना। किञ्चिदनवच्छिन्नायाः = अधिकरणतात्वभिन्नधर्मानवच्छिन्नायाः, साध्याभावाधिकरणतायाः= साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यसामान्याभावाधिकरणतायाः,इह= चतुर्थलक्षणे, विवक्षितत्वात् = तात्पर्यविषयत्वेन प्रविष्टत्वादिति यावत्। नन्वेवमपि कथमव्याप्तिर्वार्यत इत्यत आह इत्थंचेति। इत्थं च = किञ्चिदनवच्छिन्नसाध्याभावाधिकरणतायाः विवक्षितत्वेन, किञ्चिदनवच्छिन्नायाः= अधिकरणतात्वभिन्नधर्मानवच्छिन्नायाः,कपिसंयोगाभावाधिकरणतायाः=साध्याभावात्मक कपिसंयोगाभावस्य या ऽधिकरणता तस्याः, गुणादावेव = गुणकर्मादावेव,अत्रैवकारेण द्रव्ये तस्याः असत्त्वं सूचितम्, सत्त्वात् = वृत्तेः, तत्र च = किञ्चिदनवच्छिन्न साध्याभावाधिकरणताश्रये गुणादौ, हेतोरपि = हेतुभूतैतद्वृक्षत्वस्यापि, अभावसत्त्वात् = अभावस्य वर्तमानत्वात्, नाव्याप्तिः = अव्याप्तिदोषो नास्ति।

अस्यायमाशयः। किञ्चिदनवच्छिन्नत्वमपि सकलसाध्याभावाधिकरणतायां निवेशनीयं, एवञ्च तादृशसाध्याभावत्वावच्छिन्नाधेयतानिरूपितनिरवच्छिन्नाधिकरणताश्रय यावन्निष्ठाभावप्रतियोगित्वमिति लक्षणं फलितं, एवञ्च कपिसंयोग्येतद्वृक्षत्वादित्यादौ कपिसंयोगाभावत्वावच्छिन्नाधेयतानिरूपिता-धिकरणतायाः मूलावच्छिन्नायाः आर्थात् सावच्छिन्नायाः एतद्वृक्षे सत्त्वेऽपि निरवच्छिन्नाधिकरणतायाः एतद्वृक्षेऽसत्त्वात् गुणादावेवसत्त्वाच्च तादृशसाध्याभावाधिकरणं गुणादिकमेव तत्र हेतुभूतैतद्वृक्षत्वा- भावस्यापि सत्त्वेन तत्प्रतियोगित्वस्य हेतौ सत्त्वान्नाव्याप्तिरिति।

निरवच्छिन्नत्वस्य साध्याभावाधिकरणतायां विशेषणत्वेन निवेशेऽपि कपिसंयोगाभाववान् सत्त्वादित्यादावव्याप्तिरित्याशङ्क्य समाधत्ते न च कपिसंयोगाभाववानित्यादिना।

**माथुरी**

न च कपिसंयोगाभाववान् सत्त्वादित्यादौ साध्याभावस्य कपिसंयोगादेः निरवच्छिन्नाधिकरणत्वाप्रसिध्याऽव्याप्तिरिति वाच्यम्। केवलान्वयिन्यभावादित्यनेन ग्रन्थकृतैवास्य दोषस्य वक्ष्यमाणत्वात्।

**माथुरीभास्करी**

कपिसंयोगाभावेति=कपिसंयोगाभावसाध्यक सत्त्वादिसद्धेतुकस्थले, साध्याभावस्य=कपिसंयोगा-भावाभावस्य, कपिसंयोगादेः=अव्याप्यवृत्ति कपिसंयोगाद्यात्मकस्य, निरवच्छिन्नाधिकरणत्वप्रसिद्ध्या= किञ्चिदनवच्छिन्नाधिकरणत्वस्य कुत्राप्यसत्त्वेन, अव्याप्तिरिति=अव्याप्तिदोषस्स्यादिति, न वाच्यम्=न वक्तव्यम्।

अस्यायमाशयः।कपिसंयोगाभावस्य सर्वत्रसत्त्वेन तत्साध्यकं स्थलं सद्धेतुस्थलमेव । तथा च लक्षणे साध्याभावाधिकरणतायां निरवच्छिन्नत्वविशेषणनिवेशे कपिसंयोगाभाववान् सत्त्वादित्यादावव्याप्तिः। कपिसंयोगात्मकस्य साध्याभावस्याव्याप्यवृत्तित्वेन किञ्चिदवच्छेदेनैववृत्तित्वात् । तथा च तस्य निरवच्छिन्नाधिकरणत्वाप्रसिद्धेः । तद्घटित लक्षणस्याप्यप्रसिद्धेरिति ।

न च कपिसंयोगाभाववानित्यादिनोक्तदोषं इष्टापत्त्या परिहारति केवलान्वयिनीत्यादिना। केवलान्वयिन्यभावादित्यनेन=केवलान्वयिन्यभावादिति स्वीयग्रन्थेन, ग्रन्थकृतैव= चिन्तामणिग्रन्थनिर्मातृ गङ्गेशोपाध्येयेनैव,अस्य दोषस्य= कपिसंयोगाभावाद्यव्याप्यवृत्तिककेवलान्वयिस्थलीयाव्याप्तिदोषस्य, वक्ष्यमाणत्वात्= स्वीक्रियमाणत्वात् ।

अस्यायमाशयः । पञ्चस्वपिलक्षणेषु केवलान्वयिसाध्यकस्थलेऽव्याप्तिः स्यास्यत्येवेति गङ्गेशः स्वयमेव वक्ष्यति एवञ्च कपिसंयोगाभावसाध्यकस्थलस्यापि केवलान्वयिसाध्यकस्थलत्वेन तत्र दोषस्य ग्रन्थकारेण दर्शयिष्यमाणत्वादधुना तत्प्रदर्शनं नोचितमिति ।

साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकधर्ममात्रावच्छिन्नप्रतियोगिताकाभावत्वा-वच्छिन्नाधेयतानिरूपित निरवच्छिन्नाधिकरणताश्रयवृत्त्यभावप्रतियोगितावच्छेदकहेतुतावच्छेदक-धर्मवत्त्वमिति लक्षणं फलितम् । एवमपि पृथिवी कपिसंयोगादित्यादावतिव्याप्तिः स्यादित्याशङ्क्य समाधत्ते न च पृथिवी कपिसंयोगादित्यादिना ।

**माथुरी**

न च पृथिवी कपिसंयोगादित्यादौ पृथिवीत्वाभाववति जलादौ यावत्येव कपिसंयोगाभावसत्त्वादतिव्याप्तिरिति वाच्यम् । तन्निष्ठपदेन तत्रनिरवच्छिन्न-वृत्तित्त्वमस्य विवक्षितत्वात् । इत्थञ्च पृथिवीत्वाभावाधिकरणे जलादौ यावदन्तर्गते निरवच्छिन्नवृत्तिमानभावो न कपिसंयोगाभावः किन्तु घटत्वाद्यभाव एव तत्प्रतियोगित्वस्य हेतावासत्त्वान्नातिव्याप्तिः ।

**माथुरीभास्करी**

पृथिवी कपिसंयोगादित्यादौ=पृथिवीत्वसाध्यक कपिसंयोगाद्यसद्धेतुकस्थले, पृथिवीत्वाभाववति= पृथिवीत्वाभावात्मक साध्याभावाधिकरणे,जलादौयावत्येव=पृथिवीभिन्नेजलादिषु सर्वेषुपदार्थेषु, कपिसंयोगाभावसत्त्वात् = हेत्वभावात्मक कपिसंयोगाभावस्य वर्तमानत्वात्, अतिव्याप्तिः = अतिव्याप्तिदोष प्रसङ्गः, इति न च वाच्यम् = एवं प्रकारेण न वक्तव्यम्,तत्रैवहेतुमाह तन्निष्ठ-पदेनेत्यादिना, तन्निष्ठपदेन= सकलसाध्यभावाधिकरणनिष्ठपदेन, तत्र= सकलसाध्याभावा-धिकरणे, निरवच्छिन्नवृत्तिमत्त्वस्य= किञ्चिदनवच्छिन्नवृत्तिमत्त्वस्य, विवक्षितत्वात् = बोधनादिति भावः। ननु एवमपि कथमतिव्याप्तिवारणं स्यादित्यत आहेत्थञ्चेत्यादिना,इत्थञ्च=तन्निष्ठा-भावपदेन निरवच्छिन्नवृत्तिमदभावस्यैवग्रहणे, पृथिवीत्वाभावाधिकरणे= पृथिवीत्वाभावात्मक-साध्याभावाधिकरणे, यावदन्तर्गते जलादौ= सकलसाध्याभावाधिकरणमध्यगतेजलादौ, निरवच्छिन्न-वृत्तिमानभावः = किञ्चिदनवच्छेदेनवर्तमानोऽभावः, न कपिसंयोगाभावः = हेतुभूतकपिसंयोगाभावो न भवितुमर्हति, किन्तु = परन्तु, घटत्वाद्यभाव एव = घटत्वपटत्वाद्यभाव एव, तत्प्रतियोगित्वस्य= सकलसाध्याभावाधिकरणे निरवच्छिन्नवृत्तिक घटत्वाद्यभावप्रतियोगित्वस्य,हेतावसत्त्वात्= कपिसंयोगात्मक हेतावभावात्,नातिव्याप्तिः= अतिव्याप्तिदाषो न भवति।

अस्यायमाशयः। पूर्वोक्तरीत्या लक्षणे परिष्कृतेऽपि पृथिवीत्वस्य साध्यत्वे कपिसंयोगस्य हेतुत्वेऽतिव्याप्तिः। कपिसंयोगाभावात्मकहेत्वभावस्य केवलान्वयित्वेन पृथिवीत्वाभावस्वरूप-साध्याभावाधिकरणेजलादावपि सत्त्वेन तत्प्रतियोगित्वस्य कपिसंयोगात्मकहेतौ सत्त्वात् , अतः उक्तातिव्याप्तिवारणाय सकलसाध्याभावाधिकरणवृत्त्यभावे निरवच्छिन्नवृत्तिकत्वविशेषणमपिदेयं, एवञ्च सकलसाध्याभावाधिकरणे निरवच्छिन्नवृत्तिमान् योऽभावस्तप्रतियोगित्वं व्याप्तिरिति फलितम्। तथाच कपिसंयोगाभावस्याव्याप्यवृत्तित्वेन निरवच्छिन्नवृत्तिकत्वासंभवात्, पृथिवीत्वाभावा- धिकरणजलादिनिष्ठ निरवच्छिन्नवृत्तिकाभावपदेन कपिसंयोगाभावस्य ग्रहणं न संभवति,किन्तु घटत्वाद्यभावस्यैव,तत्प्रतियोगित्वस्य घटत्वादावेवसत्त्वेन कपिसंयोगेऽसत्त्वान्नातिव्याप्तिरिति।

एतवता साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकधर्ममात्रावच्छिन्नप्रतियोगिताका-भावत्वावच्छिन्नाधेयतानिरूपित निरवच्छिन्नाधिकरणताश्रयनिष्ठ निरवच्छिन्नवृत्तिकाभावीय हेतुतावच्छेदकसम्बन्धावच्छिन्न प्रतियोगितावच्छेदकतापर्याप्त्यधिकरण हेतुतावच्छेदकधर्मवत्त्वं व्याप्तिरिति फलितम्। एवमपि द्रव्यत्वाभावसाध्यक संयोगवद्भिन्नत्वहेतुकस्थलेऽव्याप्तिः स्यादित्याशङ्क्य समाधत्ते न चैवमन्योन्याभावस्येत्यादिना।

माथुरी

न चैवमन्योन्याभवस्य व्याप्यवृत्तितानियमनये द्रव्यत्वाभाववान् संयोगव-द्भिन्नत्वादित्यादेरपि सद्धेतुतया तत्राव्याप्तिः। संयोगवद्भिन्नत्वाभावस्य संयोग- रूपस्य निरवच्छिन्न वृत्तेरप्रसिद्धेरिति वाच्यम् । अन्योन्याभावस्य व्याप्यवृत्तिता- नियमनये अन्योन्याभावस्याभावो न प्रतियोगितावच्छेदकस्वरूपः किन्त्वतिरिक्तो व्याप्यवृत्तिः । अन्यथा मूलावच्छेदेन कपिसंयोगिभेदाभाव भानानुपपत्तेरिति संयोगवद्भिन्नत्वाभावस्यापि निरवच्छिन्नवृत्तिमत्त्वात् ।

माथुरीभास्करी

एवम्=तादृशसाध्याभावाधिकरणयावन्निष्ठाभावे निरवच्छिन्नवृत्तिकत्वविशेषणस्य प्रवेशे, अन्योन्याभावस्येत्यादि=भेदस्यव्याप्यवृत्तित्वमेवेतिमते, (अन्यथा वक्ष्यमाणाव्याप्तिर्नसंगच्छतइतिभावः) द्रव्यत्वाभाववान्=समवायसंवन्धावच्छिन्नद्रव्यत्वत्वावच्छिन्नप्रतियोगिताकाभाववान्, संयोगव-द्भिन्नत्वादित्यादेरपि = संयोगवद्भिन्नत्वादित्यादिस्थलीयहेतोरपि, सद्धेतुतया= समीचीनहेतुत्वेन, तत्र=द्रव्यत्वाभावसाध्यकस्थलीय संयोगवद्भिन्नत्वहेतौ, अव्याप्तिः= अव्याप्तिदोषः, अव्याप्तिदोषसत्त्वे हेतुमाह, संयोगवदित्यादि= संयोगवद्भिन्नत्वाभावस्य संयोगात्मकस्य हेत्वभावस्य, निरवच्छिन्नवृत्तेरप्रसिद्धेः= संयोगस्याव्याप्यवृत्तित्वेन निरवच्छिन्नवृत्तित्वासंभवात्, इति न वाच्यम् = एवमव्याप्तिः स्यादिति न वक्तव्यमिति भावः।

अस्यायमाशयः। पृथिवी कपिसंयोगादित्यादावतिव्याप्तिवारणाय साध्याभावाधिकरणनिष्ठा-भावे निरवच्छिन्नवृत्तिमत्त्वविशेषणमवश्यं देयम्। तथा सति द्रव्यत्वाभाववान् संयोगवद्भिन्नत्वादित्यत्राव्याप्तिः। तथाहि यस्मिन् मते भेदोव्याप्यवृत्तिस्तन्मते संयोगवद्भेदात्मकहतोः द्रव्यातिरिक्त गुणादावेव सत्त्वेन तत्र साध्यस्यापि सत्त्वादयं सद्धेतुः,तथा च संयोगवद्भेदात्मकस्य हेतोरभावः संयोगस्वरूपोऽव्याप्य-वृत्तिश्च, अतः किञ्चिदवच्छिन्नवृत्तिक एव। एवञ्च साध्याभावस्य द्रव्यत्वाभावाभावस्य द्रव्यत्वस्वरूपस्या-धिकरणे सकले द्रव्ये वर्तमानो निरवच्छिन्नवृत्तिकाभावः कपिसंयोगात्मकाभावो न भवति किन्तु घटाद्यभावस्तत्प्रतियोगित्वस्य संयोगवद्भेदात्मक हेतावसत्त्वादव्याप्तिरिति न वक्तव्यमिति।

न चान्योन्याभावस्येत्यादिनोक्तमव्याप्तिं परिहर्तुं युक्तिंदर्शयत्यन्योन्याभावस्येत्यादिना । अन्योन्याभावस्य = भेदस्य, व्याप्यवृत्तितानियमनये = व्याप्यवृत्तित्वमते, अन्योन्याभावस्याभावः= भेदस्यात्यन्ताभावः, न प्रतियोगितावच्छेदकस्वरूपः= न प्रतियोगितावच्छेदकात्मकः, किन्तु = अपितु, अतिरिक्तः = प्रतियोगितावच्छेदकभिन्नः सप्तम पदार्थ स्वरूपः, व्याप्यवृत्तिः = व्याप्यवृत्तिस्वरूपोऽपि, अन्यथा = अन्योन्याभावाभावस्य व्याप्यवृत्ति सप्तमपदार्थस्वरूपत्वमनङ्गीकृत्याव्याप्यवृत्ति-

प्रतियोगितावच्छेदकस्वरूपत्वाङ्गीकारे, मूलावच्छेदेन = मूलव्यापकत्वेन, कपिसंयोगिभेदाभावस्य = कपिसंयोग्यन्योन्याभावाभावस्य, भानानुपपत्तेः = प्रतीत्यनुपपत्तेः, तथा च सर्वावयवावच्छेदेन तादृशाभावस्य-वृक्षत्वव्यापकत्वं नस्यादिति भावः, इति = एतस्माद्धेतोः अन्योन्याभावाभावस्य व्याप्यवृत्तित्वा-भ्युपगमस्यावश्यकत्वात्, संयोगवद्भिन्नत्वाभावस्यापि = हेतुभूत संयोगवद्भिन्नत्वस्य योऽभावस्तस्यापि, निरवच्छिन्नवृत्तिमत्त्वात् = किञ्चिदनवच्छिन्न वृत्तिकत्वात् ।

अस्यायमाशयः । द्रव्यत्वाभाववान् संयोगवद्भिन्नत्वादित्यादौ संयोगवद्भिन्नत्वाभावः प्रतियोगितावच्छेदिकीभूतसंयोगस्वरूप एवेति यदि स्वीक्रियेत तदा तत्राव्याप्तिः भवितुमर्हति तदेव न स्वीक्रियते। किन्तु व्याप्यवृत्तिसप्तमपदार्थ स्वरूप एवेति भेदस्य व्याप्यवृत्तित्ववादिमते स्वीक्रियते। तथा च प्रकृतहेत्वभावात्मकस्य संयोगवद्भिन्नत्वाभावस्य व्याप्यवृत्तित्वेन निरवच्छिन्न-वृत्तिमत्त्वस्याव्याहतत्वेन तादृश साध्याभावाधिकरणनिष्ठ निरवच्छिन्नवृत्त्यभावपदेन तस्य धर्तुं शक्यत्वेन तत्प्रतियोगित्वस्य हेतौसत्त्वान्नाव्याप्तिः । किञ्च अन्योन्याभावाभावस्याव्याप्यवृत्तित्वा-भ्युपगमे सर्वावयवावच्छेदेन वृक्षत्वव्यापकः कपिसंयोगि भेदाभाव इति सिद्धान्तोभज्येतैतन्मते कपिसंयोगिभेदाभावस्य कपिसंयोगस्वरूपत्वेन तस्य मूलावच्छेदेन सत्त्वासंभवात् । तथाच प्रकृते नाव्याप्तिरिति ।

साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्न प्रतियोगिताकाभावत्वावच्छिन्ना-धेयतानिरूपितनिरवच्छिन्नाधिकरणताश्रय यावन्निष्ठ निरवच्छिन्नवृत्तिकाभावीय हेतुतावच्छेदक संबन्धावच्छिन्न प्रतियोगितावच्छेदकतापर्याप्त्यधिकरण हेतुतावच्छेदकधर्मवत्त्वं व्याप्तिरिति फलितं, एवमपि यत्र साध्याभावाधिकरणमेकमेव तत्र तद्घटत्वाभाववान् पटत्वादित्यादौ यावत्साध्याभावाधिकरणाप्रसिद्ध्याऽव्याप्तिः स्यादितिविचिन्त्य तद्वारणाय सकल पदस्य व्यापकत्वार्थकत्वं स्वीकृत्य लक्षणं परिष्करोति वस्तुतस्तिवत्यादिना ।

**माथुरी**

वस्तुतस्तु सकलपदमात्राशेषपरं नत्वनेकपरमेतद्घटत्वाभाववान् पटत्वा-दित्याद्येकव्यक्तिविपक्षके साध्याभावाधिकरणस्य यावत्त्वाप्रसिध्याऽव्याप्त्यापत्तेः। तथा च किञ्चिदनवच्छिन्नाया निरूक्तसाध्याभावाधिकरणताया व्यापकीभूतोऽभावः हेतुतावच्छेदकसम्बन्धावच्छिन्न तत्प्रतियोगितावच्छेदकहेतुतावच्छेदकवत्त्वं लक्षणार्थः। न च सत्त्वादि सामान्याभावस्यापि प्रमेयत्वादिना निरूक्तसाध्याभावाधिकरणताया व्यापकत्वात् द्रव्यं सत्त्वादित्यादावतिव्याप्तिः । तद्वन्निष्ठान्योन्याभाव प्रतियोगिता- नवच्छेदकत्वं व्यापकत्वमित्युक्तौ तु निर्धूमत्ववान् निर्वह्नित्वादित्यादावव्याप्तिः । निर्वह्नित्वाभावानां वह्निव्यक्तीनां सर्वासामेव

(चालनीन्यायेन) निर्धूमत्वाभावा-धिकरणताव न्निष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वादिति वाच्यम् । तादृशा-धिकरणतायाव्यापकतावच्छेदकं हेतुतावच्छेदकसंबन्धावच्छिन्न यद्धर्मावच्छिन्नाभावत्वं तद्धर्मवत्त्वस्य विवक्षितत्वात्, व्यापकतावच्छेदकत्वं तु तद्वन्निष्ठात्यन्ताभाव- प्रतियोगितानवच्छेदकत्वं, न तु तद्वन्निष्ठान्योन्याभाव प्रतियोगितानवच्छेदकत्वम्, तद्वति निरवच्छिन्नवृत्तिमान् योऽभावस्तत्प्रतियोगिनवच्छेदकत्वं वा, प्रकृत-व्यापकतायां प्रतियोगिवैयधिकरण्यस्य निरवच्छिन्न वृत्तित्वस्य वा प्रवेशे प्रयोजन-विरहात्, तेन पृथिवी कपिसंयोगादित्यादौ नातिव्याप्तिः। कपिसंयोगा-भावत्वस्य निरूक्त व्यापकतावच्छेदकत्व विरहादित्येव परमार्थः ।

**माथुरीभास्करी**

वस्तुतस्तु = सम्यग्विचारेक्रियमाणे, अत्र = सकलपदं सकलसाध्याभाववन्निष्ठाभाव प्रतियोगित्व-मितिलक्षणे प्रविष्टं सकलपदम् अशेषार्थकम् = व्यापकत्वार्थकम्, नत्वनेक परम् = न यावत्त्वार्थकम्, नन्वत्र सकलपदस्य विनिगमनाविरहाल्लाघवाद्धा यावत्त्वार्थकत्वमेव स्वीक्रियतामित्यत आहै तद्धटत्वाभाववा-नित्यादिना । एतद्धटत्वाभावेत्यादि = एतद्धटत्वाभाववान् पटत्वादित्यादि यदेकव्यक्तिविपक्षकम् = एकव्यक्ति साध्याभावाधिकरणकं यत्र स्थले तत्स्थलीय हेतौ, साध्याभावाधिकरणस्य = एतद्धटत्वात्मको-यएतद्धटत्वाभावाभावस्वरूपःसाध्याभावस्तदाश्रयस्य एतद्धटस्य, यावत्त्वाप्रसिद्धेः = तस्यैकत्वेन तद्वति यावत्त्वस्यासत्त्वात्, अव्याप्तेः = अव्याप्ति प्रसङ्गात् ।

अस्यायमाशयः सकलपदस्य यावत्त्वार्थकत्वं स्वीक्रियेत यदि, तदैतद्धटत्वाभाववान् पटत्वादित्या-दावव्याप्तिः । तथाहि प्रकृते साध्याभाव एतद्धटत्व स्वरूपः । तथा चास्यधिकरणमेतद्धट एक एवेति यावत्साध्याभावाधिकरणानामप्रसिध्या यावत्साध्याभावाधिकरणघटितलक्षणस्याप्यप्रसिद्धत्वात् अतोऽत्रा-व्याप्तिवारणाय सकलपदस्याशेषार्थकत्वमेव स्वीकरणीयमिति ।

उक्तदोषभिया सकलपदस्य यावत्त्वार्थकत्वे लक्षणं कथंपर्यवसितं कथंवा उक्ताव्याप्तेर्वारणं स्यादित्यत आह तथा चेति, तथा च = अत्र सकलपदस्याशेषार्थकत्वे, किञ्चिदनवच्छिन्नायाः = निरवच्छिन्नायाः, निरुक्तसाध्याभावाधिकरणतायाः = साध्यतावच्छेदकसंबन्धावच्छिन्न साध्यतावच्छेदक धर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नाधेयतानिरूपितनिरवच्छिन्नाधिकरणतायाः, व्यापकीभूतो - योऽभावः = व्यापकताविशिष्टो योऽभावः, तत्समानाधिकरणाभावप्रतियोगितानवच्छेदक धर्मावच्छिन्ना-भावेति यावत्, हेतुतावच्छेदकेत्यादि = हेतुतावच्छेदकसंबन्धावच्छिन्ना या तत्प्रतियोगिता = साध्याभावाधिकरणताव्यापकाभावीयप्रतियोगिता, तदवच्छेदकं यद्धेतुतावच्छेदकं तद्वत्त्वम्, लक्षणार्थः = चतुर्थलक्षणस्य पर्यवसितोऽर्थः ।

अस्यायमाशयः । सकलपदस्याशेषार्थकत्वे तादृशसाध्याभावाधिकरणता समानाधिकरणान्तत्याभावप्रतियोगितानवच्छेदकधर्मवदभावप्रतियोगितावच्छेदकहेतुतावच्छेदकधर्मवत्त्वं व्याप्तिरिति फलितम्। एवञ्च एतद्घटत्वाभाववान् पटत्वादित्यादौ नाव्याप्तिः । एतद्घटत्वाभावाभावात्मकस्य साध्या-भावस्य अधिकरणमेतद्घटः तन्निष्ठाभावपदेन पटत्वाभावो नास्तीत्यभावो ग्रहीतुं न शक्यते पटत्वाभावस्यैव तत्र सत्त्वात् किन्तु मठत्वाद्यभावस्तत्प्रतियोगितानवच्छेदकपटत्वाभावत्वस्य पटत्वाभावे सत्वात्पटत्वाभावः प्रकृत साध्याभावाधिकरणताव्यापक एव तथा च तत्प्रतियोगितावच्छेदक पटत्वत्वस्य पटत्वहेतौ सत्त्वादिति ।

निरुक्तसाध्याभावाधिकरणताव्यापकाभावपदेन निरुक्तसाध्याभावाधिकरणताश्रयनिष्ठाभाव-प्रतियोगितानवच्छेदकधर्मवदभावस्य ग्रहणे द्रव्यं सत्त्वादित्यादावतिव्याप्तिः स्यादित्याशङ्क्य समाधत्ते न च सत्त्वादित्यादिना ।

सत्त्वादिसामान्याभावस्यापि = हेतुभूतसत्त्वादीनामभावस्यापि, प्रमेयत्वादिना = प्रमेयत्व-वाच्यत्वादिरूपधर्मेण, निरुक्तसाध्याभावाधिकरणतायाः = साध्यतावच्छेदकसंबन्धावच्छिन्न-साध्यतावच्छेदकधर्मावच्छिन्नप्रतियोगिताक साध्याभावत्वावच्छिन्नाधेयतानिरूपितनिरवच्छिन्नाधिकरणतायाः, व्यापकत्वात् = व्यापकाभावपदेन धर्तुं शक्यत्वात्, द्रव्यं सत्त्वादित्यादौ = द्रव्यं सत्वादित्यादिस्थलीया-सद्धेतौ, अतिव्याप्तिः = अतिव्याप्तिदोषप्रसङ्गः ।

अस्यायमाशयः। निरुक्तसाध्याभावाधिकरणताव्यापकाभावपदेन तदधिकरणता समानाधिकरणा-त्यन्ताभावीयप्रतियोगितानवच्छेदकधर्मवदभावस्यैव ग्राह्यत्वेन द्रव्यं सत्त्वादित्यत्रातिव्याप्तिः । तथाहि द्रव्यत्वाभावाधिकरणे गुणादौ प्रमेयं नास्तीत्यभावो न लभ्यते । किन्तु घटाद्यभावस्तत्प्रतियोगिता-नवच्छेदक प्रमेयत्ववाच्यत्वादिधर्मवान् सत्ताभावोऽपीति सत्ताभावात्मकप्रकृतहेत्वभावस्यापि तादृश साध्याभावाधिकरणताव्यापकत्वेन तत्प्रतियोगितावच्छेदकत्वस्य हेतुतावच्छेदक सत्तात्वेऽव्याहतत्वेन तद्वत्वस्य हेतौ सत्त्वादिति ।

ननु तादृशसाध्याभावाधिकरणताव्यापकाभावपदेन तदधिकरणता समानाधिकरणान्योन्याभाव-प्रतियोगितानवच्छेदकाभाव एव गृह्यते, न तु पूर्वोक्ताऽत्यन्ताभावघटितस्तथाच द्रव्यं सत्त्वादित्यत्र नातिव्याप्तिः । साध्याभावात्मक द्रव्यत्वाभावाधिकरणे गुणादौ सत्ताभाववान्नेति भेदस्य सत्त्वेन तत्प्रतियोगितावच्छेदकत्वस्य हेत्वभावे सत्त्वेन तत्प्रतियोगितानवच्छेदकत्वस्यासत्त्वात् तादृशाभावा-धिकरणताव्यापकाभावपदेन सत्ताभावस्य ग्रहणासंभवेन, योऽभावो गृह्यते तत्प्रतियोगितावच्छेदकत्वस्य हेतुतावच्छेदकेऽसत्त्वादित्यवान्तरशङ्कां विधाय समाधत्ते तद्वन्निष्ठेत्यादिना । तद्वन्निष्ठान्योन्याभाव-प्रतियोगितानवच्छेदकत्वं व्यापकत्वमित्युक्तौ = निरुक्तसाध्याभावाधिकरणताश्रय निष्ठान्योन्याभाव-प्रतियोगितानवच्छेदकत्वात्मक व्यापकत्वमेव प्रकृतलक्षणे निवेशनीयमिति कथने, निर्धूमत्ववान् निर्वह्नित्वादित्यादौ = धूमाभावसाध्यक वह्न्यभावहेतुक सद्धेतुस्थले, अव्याप्तिः = लक्षणाभाव-

प्रसङ्गः। अव्याप्तिमेवसङ्गमयति निर्वह्नित्वाभावानामित्यादिना, निर्वह्नित्वाभावानाम् = हेतुभूत वह्न्यभावस्याभावस्वरूपाणाम्, वह्निव्यक्तीनां सर्वासामेव = यावन्तोहेत्वभावात्मिका वह्निव्यक्तयः तासां सर्वासाम्, चालनी न्यायेन = प्रसिद्धो यश्चालनीन्यायस्तेन, निर्धूमत्वाभावेत्यादि = साध्यीभूतं यन्निर्धूमत्वम् = धूमाभवस्तस्ययोऽभावस्तस्य धूमस्वरूपस्याधिकरणता तद्वन्निष्ठो योऽन्योन्याभावस्तत्प्रतियोगितावच्छेदकत्वात् ।

अस्यायमाशयः । अत्यन्ताभावघटित व्यापकत्वं परित्यज्य तादृश साध्याभावाधिकरणतासमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वरूप व्यापकत्वस्य प्रकृतलक्षणे प्रवेशे एतद्घटत्वा-भाववान् पटत्वादित्यादौ पूर्वोक्तरीत्या यद्यपि अव्याप्तिर्वार्यते तथापि निर्धूमत्ववान् निर्वह्नित्वादित्यादा-वव्याप्तिः । तथाहि धूमाभावात्मकं निर्धूमत्वं साध्यं तदभावो धूमाभावाभावो धूमस्वरूपः, तदधिकरणं पर्वतचत्वरमहानसादिकं तन्निष्ठो योऽन्योन्याभावः पर्वतीयवह्निमान्न, चत्वरीयवह्निमान्न, इत्याकारक सकल वह्निव्यक्त्यभावः पर्वते महान सीयादि वह्न्यभावस्य महानसादौ पर्वतीयवह्न्याद्यभावस्य सत्त्वात् । तथा च वह्न्यात्मको हेत्वभावः साध्याभावाधिकरणतावन्निष्ठानयोन्याभावप्रतियोगितावच्छेदक एवेति हेत्वभावस्य तदधिकरणत्व व्यापकाभावत्वासंभवेन लक्षणघटकत्वासंभवात् । अन्याभावग्रहणे तत्प्रतियोगित्वस्य हेतावसत्त्वादव्याप्तिः । तथाचात्यन्ताभावघटितस्यान्योन्याभावघटितस्य वा व्यापकत्वस्य निवेशेऽव्याप्तेर्दुर्वारत्वादिदं लक्षणं असंङ्गतमेवेति ।

न च सत्तासामान्याभावस्यापीत्यादिनोक्तं दोषं न च वाच्यमित्यनेन निषिध्य तत्समर्थनाय लक्षणस्य निर्दुष्टमर्थं प्रदर्शयति तादृशाधिकरणताया इत्यादिना । तादृशाधिकरणतायाः = सध्यतावच्छेदकसंवन्धावच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नाधेयतानिरूपितनिरवच्छिन्नाधिकरणतायाः, व्यपकतावच्छेदकम् = या व्यापकता तदवच्छे दकम्, हेतुतावच्छेदकेत्यादि = हेतुतावच्छेदकसंवन्धावच्छिन्ना हेतुतावच्छेदकधर्मावच्छिन्ना या प्रतियोगिता तन्निरूपकाभावत्वम्, व्यापकतावच्छेदक पदार्थः क इत्यत आह व्यापकतावच्छेदकेत्यादि, व्यापकतावच्छेदकत्वम् = व्यापकतावच्छेदक पदार्थस्तु, तद्वन्निष्ठात्यन्ताभाव प्रतियोगितानवच्छेदकत्वम् = तादृश साध्याभावाधिकरणतावन्निष्ठोयोऽत्यन्ताभावस्तत्प्रतियोगितानवच्छेदकत्वम्, न तु तद्वन्निष्ठेत्यादि = तादृशाधिकरणतावन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वरूपं नेत्यर्थः, तद्वति = तादृश साध्याभावाधिकरणतावति, निरवच्छिन्नवृत्तिमान् योऽभावः = किञ्चिदनवच्छिन्नवृत्तिको योऽभावः तत्प्रतियोगितानवच्छेदकत्वं वा न व्यापकत्वावच्छेदकत्व पदार्थ इति भावः । अत्र हेतुमाह प्रकृतेति, प्रकृत व्यापकतायाम् = चतुर्थलक्षण घटक सकलपदार्थ रूप व्यापकतायाम्, प्रतियोगिवैयधिकरण्यस्य = प्रतियोगि वैयधिकरण्यविशेषणस्य =निरवच्छिन्नवृत्तित्वस्य = निरवच्छिन्नवृत्तिकत्वविशेषणस्य वाऽभावे, प्रवेशे = निवेशे, प्रयोजनविरहात् = प्रयोजनाभावात् । प्रतियोगि वैयधिकरण्यस्य निरवच्छिन्नवृत्तित्वस्य वा निवेशे केवलं न प्रयोजनाभावः किन्तु अतिव्याप्तिरपि स्यादित्याह तेनेति । तेन =

प्रतियोगिवैयधिकरण्यस्य निरवच्छिन्नवृत्तित्वस्य वा व्यापकताघटकाभावेऽनिवेशनेन, पृथिवी कपिसंयोगादित्यादौ = पृथिवीत्वसाध्यक कपिसंयोगहेतुक दुष्टहेतौ, नातिव्याप्तिः = अतिव्याप्ति दोषो न भवति, तत्र हेतुमाह कपिसंयोगाभावेति, कपिसंयोगाभावत्वस्य = हेतुभूतकपिसंयोगाभावत्वस्य, निरूक्तव्यापकतावच्छेदकत्वविरहात् = प्रतियोगिवैयधिकरण्येन निरवच्छिन्नवृत्तिमत्वेन वाऽघटितस्य तादृशसाध्याभावाधिकरणताश्रय निष्ठस्याभावस्य प्रतियोगितानवच्छेदकत्वरूप व्यापकतावच्छेदकत्वस्या-सत्त्वात्, इत्येव परमार्थः = एवमुक्तार्थ एव निर्दुष्टार्थ इति भावः।

अस्यायमाशयः । हेतुतावच्छेदकसंबन्धावच्छिन्नयद्धर्मावच्छिन्नाभाववत्वं तादृशसाध्याभावाधिकरणताश्रयनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकं तद्धर्मवत्त्वमेव व्याप्तिरिति फलितम् । अत्र यद्धर्मपदेन हेतुतावच्छेदकधर्मोग्राह्यः । तथा च द्रव्यं सत्त्वादित्यादौ द्रव्यत्वाभावात्मकसाध्याभावाधिकरणे गुणे सत्ताभावाभावस्यैव सत्त्वेन सत्तात्वावच्छिन्नाभावत्वे तादृशव्यापकतावच्छेदकत्वस्यासत्त्वेन यत्पदेन सत्तात्वस्य धर्तुमशक्यत्वेन नातिव्याप्तिः । निर्धूमत्ववान् निर्वह्नित्वादित्यादौ धूमाभावाभावात्मक साध्याभावाधिकरणे पर्वतादौ वह्न्यात्मक वह्न्यभावाभावो नास्तीत्यभावस्यासत्त्वेन वह्न्यभावत्वावच्छिन्ना-भावत्वे तादृशसाध्याभावाधिकरणतासमानाधिकरणात्यन्ताभाव प्रतियोगितानवच्छेदकत्वस्याव्यहतत्वेन यत्पदेन वह्न्यभावत्वस्य धर्तुं शक्यत्वान्नाव्याप्तिः ।

वह्निमान् धूमादित्यादौ वह्न्यभावाधिकरणताव्यापकतावच्छेदकत्वस्य धूमत्वावच्छिन्नाभावत्वे सत्त्वेन यत्पदेन धूमत्वमादाय लक्षण समन्वयः । तादृश व्यापकताघटकसाध्याभावाधिकरणता-समानाधिकरणाभावे प्रतियोगिवैयधिकरण्यं निरवच्छिन्न वृत्तित्वं वा न निवशनीयं प्रयोजनाभावात् । किञ्च तन्निवेशे पृथिवीत्वसाध्यक कपिसंयोगादिदुष्टहेतावतिव्याप्तिरपिस्यात् । तथाहि पृथिवीत्वा-भावात्मक साध्याभावाधिकरणताश्रयो जलादिः तन्निष्ठो योनिरवच्छिन्नवृत्तिकाभावः कपिसंयोगाभावा-भावो न भवितुमर्हति । तस्य कपिसंयोगरूपत्वेन निरवच्छिन्नवृत्तिकत्वासंभवात् किन्तु घटाद्यभाव-स्तत्प्रतियोगितानवच्छेदकत्वस्य कपिसंयोगाभावत्वे सत्त्वेन यत्पदेन कपिसंयोगत्वस्य ग्रहणा-दतिव्याप्तिः स्यात् । तदनिवेशे नातिव्याप्तिः । तादृश साध्याभावाधिकणजलह्रदादौ कपिसंयोगाभावा-भावस्य सत्त्वेन तत्प्रतियोगितानवच्छेदकत्वरूप व्यापकतावच्छेदकत्वस्य कपिसंयोगाभावत्वेऽसत्त्वेन यत्पदेन कपिसंयोगत्वस्य ग्रहणासंभावादिति ।

**चतुर्थ लक्षण व्याख्या समाप्ता ।**

## अथ पञ्चम लक्षणम्।

### चिन्तामणिः

साध्यवदन्यावृत्तित्वं वा, केवलान्वयिन्यभावात्।

### माथुरीभास्करी

लक्षणान्तरं व्याख्यातुमुपक्रमतेऽत्रापीत्यादिना।

### माथुरी

अत्रापि प्रथमलक्षणोक्तरीत्या हेतौ साध्यवदन्यवृत्तित्वाभाव इत्यर्थः। तादृश वृत्तित्वभावश्च तादृशवृत्तित्वसामान्याभावो बोध्यः। तेन धूमवान् वह्वेरित्यादौ धूमवदन्यजलह्रदादिवृत्तित्वभावस्य, धूमवदन्यवृत्तित्व जलत्वोभयाभावस्य च हेतौ सत्त्वेपि नातिव्याप्तिः। साध्यवदन्यत्वं च अन्योन्याभावत्वनिरूपितसाध्यवत्त्वा-वच्छिन्नप्रतियोगिताकाभाववत्त्वम्। तेन वह्निमान् धूमादित्यादौ तत्तद्वह्नि-मदन्यस्मिन् धूमादेर्वृत्तावपि नाव्याप्तिः। न वा वह्निमत्त्वावच्छिन्न प्रतियोगिताका-त्यन्ताभावस्य स्वावच्छिन्नभिन्नभेदरूपस्याधिकरणे पर्वतादौ धूमस्य वृत्तावप्यव्याप्तिः, तस्य साध्यवत्त्वावच्छिन्नप्रतियोगिताकात्यन्ताभावत्वनिरूपितत्वेनान्योन्या - भावत्वनिरूपितत्वविरहात्। अन्योन्याभावत्वनिरूपितत्वञ्च तादात्म्य संबन्धा-वच्छिन्नत्वमेव। साध्यवत्त्वञ्च साध्यतावच्छेदकसंबन्धेन बोध्यम्। तेन वह्निमान् धूमादित्यादौ वह्निमत्त्वावच्छिन्नप्रतियोगिताकस्य समवायेन वह्निमतोऽन्योन्या-भावस्याधिकरणे पर्वतादौ धूमादेर्वृत्तावपि नाव्याप्तिः। सर्वमन्यत्प्रथमलक्षणोक्त-दिशाऽवसेयम्। यथाचास्य न तृतीयलक्षणाभेदः तथोक्तं तत्रैवेति समासः।

### माथुरीभास्करी

अत्रापि=साध्यवदन्यावृत्तित्वरूपपञ्चमलक्षणेऽपि, प्रथमलक्षणोक्तरीत्या = प्रथमलक्षणे साध्यभाववतः नास्ति वृत्ति र्यत्रेत्यादि व्यधिकरणसामासादिकमाश्रित्य यथा साध्याभावाधिकरण-निरूपितवृत्तित्वाभावरूपोऽर्थो विवक्षितस्तथा साध्यवदन्यस्मिन्नास्ति वृत्तिर्यत्रेत्यादि व्यधिकरणबहुव्रीहि-समासाद्याश्रयणेन, हेतौ = धूमाद्यात्मकहेतौ, साध्यवदन्यवृत्तित्वाभावः = साध्यवद्भिन्ननिरूपित-वृत्तित्वाभाव एवार्थोविवक्षणीय इति भावः। एवमपि धूमवान् वह्नेः इत्यादिस्थलेऽतिव्याप्तिःस्यादिति मत्वा

तद्वारणाय साध्याभावं परिष्करोति तादृशेत्यादिना । तादृशवृत्तित्वाभावश्च = साध्यवदन्यनिरूपित-वृत्तित्वाभावश्च , तादृशवृत्तित्वसामान्याभावो बोध्यः = साध्यवदन्यनिरूपितवृत्तितात्वेतर-धर्मानवच्छिन्न तादृशवृत्तितात्वावच्छिन्नप्रतियोगिताकाभवो बोध्यः । तादृशवृत्तित्वसामान्याभावनिवेशस्य प्रयोजनं दर्शयति तेनेत्यादिना । तेन = साध्यवदन्यवृत्तित्वाभाव पदेन साध्यवदन्यनिरूपिवृत्तित्व-सामान्याभावस्य विवक्षणेन, धूमवान् वह्नेरित्यादौ = धूमवान् वह्नेरित्यादिदुष्टहेतुकस्थले , धूमवदन्येत्यादि = धूमवद्भिन्नो यो जलह्रदादिस्तन्निरूपित वृत्तित्वाभावस्य,धूमवदन्यजलह्रदादिनिरूपितवृत्तित्वं-नास्तीतिविशेषाभावात्मकस्य, धूमदन्यवृत्तित्वजलत्वोभयाभावस्य च = धूमवदन्यवृत्तित्वजलत्वैतदुभयं नास्तीत्याकारकाभावस्य च, हेतौ = वह्न्यादि हेतौ, सत्त्वेपि = वृत्तेरपि, नातिव्याप्तिः = अतिव्याप्ति- दोषो न भवतीत्यर्थः ।

अस्यायमाशयः । वृत्तस्याभावोऽवृत्तमित्यादि प्राचीनसम्मतसमासं परित्यज्य साध्यवद-न्यस्मिन्नास्तिवृत्तिर्यत्रेत्यादि समासमेवाश्रित्य हेतुनिष्ठ साध्यवदन्यनिरूपित वृत्तित्वाभावो व्याप्तिरिति कथनीयम्। एवमपि धूमवान् वह्नेरित्यादावतिव्याप्तिः । तथाहि लक्षण घटक वृत्तित्वाभावपदेन वृत्तित्वविशेषा-भावस्य वृत्तित्वजलत्वाद्युभयाद्यभावस्य च ग्रहीतुं शक्यत्वात्, तथाच धूमवदन्योन्याभावाधिकरण जलह्रदादिनिरूपितवृत्तित्वाभावस्य तादृशवृत्तित्वजलत्वोभयाद्यभावस्य च धूमवदन्यानिरूपितवृत्तित्वाभाव-पदार्थत्वेन तस्य वह्न्याद्यात्मकहेतौ सत्त्वादतस्तादृशस्थलेष्वतिव्याप्तिवारणाय तादृश वृत्तित्वाभावपदेन तादृश वृत्तित्वसामान्याभाव एव विवक्षणीयः । तथा च साध्यवदन्यनिरूपितवृत्तित्वत्वेतरधर्मानवच्छिन्न तादृशवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावोव्याप्तिरिति फलितम् । एवञ्च धूमवान् वह्नेरित्यादौ धूमवदन्यजलह्रदादिनिरूपितवृत्तित्वाभावस्य धूमवदन्यनिरूपितवृत्तितात्वभिन्नेन धूमवदन्यजलह्रद-निरूपितवृत्तितात्वावच्छिन्नप्रतियोगिताकत्वात् । तथा धूमवदन्यनिरूपितवृत्तित्वजलत्वोभयाभावस्य च धूमवदन्यनिरूपितवृत्तितात्वेतरेण जलत्वत्वधर्मावच्छिन्नप्रतियोगिताकात्वाच्चैतदभावद्वयमपि तादृशवृत्तित्वसामान्याभावपदेन ग्रहीतुं न शक्यते किन्तु धूमवदन्यनिरूपितवृत्तित्वसामान्याभाव एव ग्राह्यस्तस्य च वह्निहेतावसत्त्वान्नातिव्याप्तिरिति ।

तादृशवृत्तित्वाभाव पदेन तादृशवृत्तित्वसामान्याभावस्य विवक्षणेऽपि वह्निमान् धूमादित्यादिव्याप्तिः स्यादित्याशङ्क्य समाधत्ते साध्यवदन्यत्वञ्चेत्यादिना ।

साध्यवदन्यत्वञ्च = साध्यवदन्यत्वपदार्थश्च, अन्योन्याभावत्वनिरूपितेति = अन्योन्याभावत्व-निरूपिता या साध्यवत्त्वावच्छिन्नप्रतियोगिता तन्निरूपकाभावत्वम्, प्रतियोगितायां साध्यवन्निष्ठत्व-मनिवेश्य साध्यवत्त्वावच्छिन्नत्वनिवेशस्य अन्योन्याभावत्वनिरूपितत्वनिवेशस्य च फलमाह तेनेत्यादिना, तेन = अन्योन्याभावत्वनिरूपितसाध्यवत्त्वावच्छिन्नप्रतियोगिताकाभावत्वविवक्षणेन, वह्निमान् धूमादित्यादौ = वह्निमान् धूमादित्यादि सद्धेतुस्थले, तत्तद्वह्निमदन्यस्मिन् = तत्तद्वह्निमा-

न्नेत्याकारकभेदवति वह्निमज्जलोभयन्नेत्याकारकभेदवति च पर्वतादौ, धूमादेः =हेतुभूत धूमादेः, वृत्तावपि = सत्त्वेपि, नाव्याप्तिः = अव्याप्ति दोषो नास्ति।

प्रतियोगितायां साध्यवत्त्वावच्छिन्नत्वदलस्य प्रयोजनं प्रदर्श्य तत्रान्योन्याभावत्वनिरूपितत्वदलस्य प्रयोजनं दर्शयति नवेत्यादिना । वह्निमत्त्वावच्छिन्नप्रतियोगिताकात्यन्ताभावस्य = वह्निमान्नास्तीत्याकारकस्य, स्वावच्छिन्नभिन्नभेदरूपस्य = स्वं वह्निमान् नास्तीत्यन्यन्ताभावः तदवच्छिन्नं पर्वतादिकम् तद्भिन्नो वह्निमद्विशिष्टः कालादिस्तद्भेदरूपस्य, (समनियाताभावयोरैक्यादितिभावः), अधिकरणे = आश्रये पर्वतमहानसादौ, धूमस्य = धमरूपहेतोः, वृत्तावपि = सत्त्वेऽपि नाव्याप्तिरिति योजना, अव्याप्त्यभावे हेतुमाह तस्येत्यादि, तस्य = वह्निमत्त्वावच्छिन्न प्रतियोगिताकाभावस्य, अत्र षष्ठयाः निरूपितत्वमर्थः । तथा च तदभावनिरूपिताया इति फलितम् । साध्यवत्त्वेति = साध्यवत्त्वावच्छिन्ना या प्रतियोगिता तस्याः, अत्यन्ताभावत्व निरूपितत्वेन = तादात्म्यसंवन्धावच्छिन्नत्वाभावेन, अन्योन्याभाव निरूपितत्वविरहात् = अन्योन्याभावनिरूपितत्वाभावात्, किन्नामान्योन्याभावनिरूपितत्वमित्यत आहान्योन्याभावेति, अन्योन्याभावत्वनिरूपितत्वञ्च = भेदत्वनिरूपितत्वञ्च, तादात्म्यसंवन्धावच्छिन्नत्वमेव = तादात्म्य- रूपो यः संवन्धास्तदवच्छिन्नत्त्वमात्रमित्यर्थः ।

अस्यायमाशयः । साध्यवदन्यावृत्तित्वमित्यत्र साध्यवतोऽन्य इति ततपुरुषसमासे साध्यवनि प्रतियोगिताकभेदवन्निरूपितवृत्तित्वाभावो लभ्यते । तथा च वह्निमान् धूमादित्यादौ साध्यव प्रतियोगिताकभेदो महानसीयवह्निमान्नेत्याद्याकारकः , वह्निमज्जलोभयन्नेत्यकारकश्च । तदधि पर्वतादिकमपि तत्र धूमाद्यात्मक हेतोः सत्त्वेन तन्निरूपितवृत्तित्वाभावस्य धूमादिहेतावसत्त्वादव्याप्ति- रतस्तद्वारणार्थं साध्यवत्त्वावच्छिन्न प्रतियोगिताकभेदवदवृत्तित्वमेव विवक्षणीयं, एवंच दर्शितोभयभेदस्य वह्निमत्त्वावच्छिन्न प्रतियोगिताकत्वाभावेन लक्षणघटकत्वाभावात्तद्भेदमादाय नाव्याप्तिः। एवमपि तद्दोष- तादवस्थ्यं वह्निमदत्यन्ताभावविशिष्ट पर्वतादिभिन्न भेदस्य वह्निमत्त्वावच्छिन्नप्रतियोगिताकात्यन्ताभावस्य च समनियतत्वेनैक्यात् । तथा च वह्निमदत्यन्ताभावस्यापि भेदत्वेन वह्निमत्त्वावच्छिन्न प्रतियोगिताक-भेदपदेन धर्तुं शक्यतया तद्वति पर्वतादौ धूमादिहेतौः सत्त्वादव्याप्तिरतस्तद्वारणाय साध्यवत्त्वावच्छिन्न- प्रतियोगितायामन्योन्याभावत्वनिरूपितत्वविशेषणमपि निवेशनीयम् । अन्योन्याभावनिरूपितत्वं तादात्म्यसम्बन्धावच्छिन्नत्वम् । तथा च समनियताभावयोरैक्येऽपि तत्प्रतियोगितयोरैक्याभावात् वह्निमत्त्वावच्छिन्नप्रतियोगिताकात्यन्ताभावस्य तादात्म्यसंवन्धावच्छिन्नप्रतियोगिताकत्वाभावेन तस्य तादृशाभावपदेन ग्रहणासंभवान्नाव्याप्तिरिति ।

अन्योन्याभावत्वनिरूपितसाध्यवत्त्वावच्छिन्नप्रतियोगितानिरूपक भेदवन्निरूपितवृत्तित्व- सामान्याभावोव्याप्तिरिति फलितम् । एवमपि वह्निमान् धूमादित्यादावव्याप्तिः स्यादित्याशङ्क्य- समाधत्ते साध्यवत्त्वञ्चेत्यादिना, साध्यवत्त्वंञ्च = साध्याधिकरणत्वञ्च, साध्यतावच्छेदक सम्बन्धेन = साध्यतावच्छेदकीभूतो यः सम्बन्धः तेन, बेध्यम् = ज्ञेयम्, साध्यतावच्छेदकसंवन्धेन साध्यवत्त्व-विवक्षायाः

फलमाह तेनेत्यादिना, तेन = साध्यतावच्छेदकसंबन्धेन साध्यवत्त्वस्य प्रवेशेन, वह्निमान् धूमादित्यादौ = वह्निमान् धूमादित्यादि सद्धेतुस्थले, वह्निमत्त्वावच्छिन्नप्रतियोगिताकस्य = वह्निमत्त्वावच्छिन्नप्रतियोगितानिरूपकस्य, समवायेन वह्निमतोऽन्योन्याभावस्य = समवायसंबन्धेन वह्निमान्नेत्यकारकस्य, अधिकरणे = आश्रये, पर्वतादौ = पर्वतचत्वरादौ, धूमादेर्वृत्तावपि = धूमादिहेतोः सत्त्वेऽपि, नाव्याप्तिः = अव्याप्तिदोषो नास्तीति भावः।

अस्यायमाशयः। वह्निमान् धूमादित्यादौ तादृशसाध्यवत्त्वावच्छिन्न प्रतियोगिताकान्योन्याभावपदेन संयोगेन वह्निमान्नेत्याकारकाभावो यथा गृह्यते तथा समवायेन वह्निमान्नेत्याकारका-भावोऽपि धर्तुं शक्यते। तथा च तदधिकरणं पर्वतादिः तत्र धूमादि हेतोः सत्त्वेन तन्निरूपित वृत्तित्वाभावस्य हेतावसत्त्वेनाव्याप्तिरिति। तद्वारणाय साध्यवत्त्वनिष्ठावच्छेदकतायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वंनिवेश्यते, अत्र साध्यतावच्छेदकसम्बन्धः संयोगसम्बन्धः नतु समवायसंबन्धः अतः समवायेन वह्निमान्नेत्याकारकाभावो धर्तुं न शक्यत इति नाव्याप्तिः इति भावः।

वह्निमान् गगनात्, सत्तावन् जातेः, द्रव्यं विशिष्टसत्त्वादित्यदौ दोषो दुर्निर्वार एवेत्यत आह सर्वमन्यदित्यादि। अन्यत्सर्वम् = वह्निमान् गगनादित्यादौ दोषाणां वारणम्, प्रथमलक्षणोक्तदिशा = हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणतानिरुपित हेतुतावच्छेदकसंवन्धावच्छिन्नाधेयताप्रतियोगिकस्वरूपसंबन्धेनेत्यादि प्रथमलक्षणोक्तप्रकारेण, अवसेयम् = बोध्यम्, अस्मिन् लक्षणे ये ये दोषाः संभाव्यन्ते ते सर्वे प्रथमलक्षणोक्त युक्तिभिरेव निराकरणीया इति भावः।

नन्वेवमस्य तृतीयलक्षणेन सहाभेदोदुर्निवारेत्यत आह यथाऽस्येति, अस्य = पञ्चमलक्षणस्य, यथा = येन प्रकारेण, तृतीयलक्षणाभेदः = तृतीयलक्षणेन सहैक्यं न स्यात्, तथा = तेन प्रकारेण, उक्तम् = प्रतिपादितम्, तत्रैव=तृतीय लक्षण एव।

अस्यायमाशयः। तृतीयलक्षणेऽधिकरणतात्वेन साध्याभावाधिकरणतायाः प्रवेशः पञ्चमलक्षणे साध्याभाववत्त्वत्वेन साध्याभाववत्त्वस्य प्रवेशाच्च नोभयोरभेद इति पूर्वमेवोक्तमिति नात्रोच्यतेति।

केवलान्वयिन्याभादितिचिन्तामणिं व्याख्याति सर्वाण्येवेत्यादिना।

**माथुरी**

सर्वाण्येव लक्षणानि केवलान्वयिन्यव्याप्त्या दूषयति "केवलान्वयि-न्यभावात्" इति, पञ्चानामेव लक्षणानां इदं वाच्यं ज्ञेयत्वादित्यादि व्याप्यवृत्ति-केवलान्वयिसाध्यके, द्वितीयादिलक्षणचतुष्टयस्य तु कपिसंयोगाभाववान् सत्त्वा-दित्याद्यव्याप्यवृत्तिसाध्यकेऽपि चाभावादित्यर्थः। साध्यतावच्छेदकसंबन्धावच्छिन्न साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभावस्य, साध्यतावच्छेदकसंबन्धेन

साध्यवत्त्वावच्छिन्नप्रतियोगिताकान्योन्याभावस्य चाप्रसिद्धत्वात्, कपिसंयोगा-भाववान् सत्त्वादित्यादौ निरवच्छिन्न साध्याभावाधिकरणत्वस्याप्रसिद्धत्वा-चेतिभावः । तृतीयलक्षणस्य केवलान्वयिसाध्यकासत्त्वञ्च तद्व्याख्यानावसर एव प्रपञ्चितम् । एतच्चोपलक्षणम् । द्वितीये कपिसंयोग्येतद्वृक्षत्वादित्यादावप्य-व्याप्तिः,अधिकरणभेदेन अभावभेदे मानाभावेन कपिसंयोगवद्भिन्नवृत्तिकपिसंयोगा-भाववति वृक्षे एतद्वृक्षत्वस्य वृत्तित्वात् । न च साध्यवद्भिन्नवृत्तित्वविशिष्ट साध्याभाव-वदवृत्तित्वं वक्तव्यम्, एवञ्च वृक्षस्य विशिष्टाधिकरणत्वाभावान्नाव्याप्तिरिरिति वाच्यम्, साध्याभावपदवैयर्थ्यापत्तेः । साध्यावद्भिन्नवृत्तित्वविशिष्टवदवृत्तित्वस्यैव सम्यक्त्वात् । सद्धेतौ हेत्वधिकरणे विशिष्टाधिकरणत्वाभावादेवासंभवाभावात्, तृतीये साध्यवत्प्रतियोगिकान्योन्याभावमात्रस्य घटकत्वे चालनीन्यायेनान्योन्या-भावमादाय नानाधिकरणसाध्यके वह्निमान् धूमादित्यादावव्याप्तिश्चेत्यपि बोध्यम् ।

**माथुरीभास्करी**

सर्वाण्येव लक्षणानि = पूर्वं व्याप्तेर्यानि पञ्चलक्षणानि प्रतिपादितानि तानि सर्वाण्यपि, केवलान्वयि-न्यव्याप्त्या = इदं वाच्यं ज्ञेयत्वादित्यादि अत्यन्ताभावाप्रतियोगिकत्वरूपकेवलान्वयि-साध्यकस्थले लक्षणस्याभावेन, दूषयति = पञ्चापि व्याप्तिलक्षणानि निराकरोति गङ्गेशोपाध्यायः । केवलान्वयिन्यभावादित्यादिना = केवलान्वयिन्यभावादिति ग्रन्थेन, यस्य लक्षणस्य यत्र येन प्रकारेण दोषो भवति तत्सर्वं विशदीकृत्य दर्शयति पञ्चानामेवेत्यादिना । पञ्चानामेव लक्षणानाम् = साध्याभाववद-वृत्तित्वमित्यादीनां पूर्वोक्तानां लक्षणानाम् , इदं वाच्यमिति = इदं वाच्यं ज्ञेयत्वादित्यादिकं यद्व्याप्यवृत्तिकेवलान्वयि साध्यकंस्थलं तत्र, द्वितीयादि लक्षणचतुष्टयस्य तु = साध्यवद्भिन्नसाध्या-भाववदवृत्तित्वमित्यादीनां चतुर्णामपि लक्षणानाम्, कपिसंयोगाभावेत्यादि = कपिसंयोगाभाववान् सत्त्वादित्यादिकं यदव्याप्यवृत्तिसाध्यकस्थलं तत्रापि च, अभावात् = असत्त्वादव्याप्तिरिति भावः ।

केवलान्वयिसाध्यकस्थले लक्षणस्यासत्त्वे हेतुं दर्शयति साध्यतावच्छेदकेत्यादिना । साध्यता-वच्छेदकेत्यादि = साध्यतावच्छेदकसंबन्धावच्छिन्ना, साध्यतावच्छेदकधर्मावच्छिन्ना या साध्यनिष्ठा-प्रतियोगिता तन्निरुपकाभावस्य स्वरूपसंबन्धेन वाच्यत्वं नास्तीत्याकारकस्य, साध्यतावच्छेदकेति = साध्यतावच्छेदकीभूतो यः स्वरूपादिसंबन्धस्तेन, साध्यवत्त्वेत्यादि = वाच्यत्वादिस्वरूपंयत्साध्यं तद्वत्त्वावच्छिन्न साध्यवन्निष्ठप्रतियोगिताकाभावस्य स्वरूपसंबन्धेन वाच्यं नेत्याद्याकारकस्य, अप्रसिद्धत्वात् = क्वाप्यसत्त्वात् । कपीति = कपिसंयोगाभाववान् सत्त्वादित्याद्यव्याप्यवृत्तिसाध्यकस्थले, निरवच्छिन्नेति = निरवच्छिन्नं कपिसंयोगात्मक साध्याभावस्याधिकरणत्वं तस्याप्रसिद्धत्वात् । तृतीय-लक्षणस्य = साध्यवत्प्रतियोगिकान्योन्याभावासामानाधिकरण्यात्मकलक्षणस्य, केवलान्वयीति = इदं वाच्यं

ज्ञेयत्वादित्यादि केवलान्वयिसाध्यकस्थले साध्याभावस्य प्रसिद्धत्वेऽपि तद्वति हेतोः सत्त्वेनाव्याप्तिः स्यादेवेति प्रपञ्चितमिति भावः । एतच्चोपलक्षणम् = केवलान्वयि साध्यकस्थले- दोषप्रदर्शनं केवलमुदाहरणार्थमेव न तु तदन्योदोषोनास्तीतिद्योतनार्थम् । नन्वेवं कोऽन्योदोष इत्यत आह द्वितीयेत्यादि । द्वितीय = साध्यवद्भिन्नसाध्याभाववदवृत्तित्वमिति द्वितीयलक्षणे, कपिसंयोग्ये-तद्वृक्षत्वादित्यादावपि = कपिसंयोगाद्यव्याप्यवृत्तिसाध्यकसद्धेतुस्थलेऽपि, अव्याप्तिः = अव्याप्ति- प्रसङ्गः । तत्रैव हेतुं दर्शयत्यधिकरणेत्यादिना, अधिकरणभेदेन = आश्रयभेदेन, अभावभेदे = अभावभेदा-भ्युपगमे, मानाभावेन = प्रामाणासत्त्वेन, कपिसंयोगेत्यादि = कपिसंयोगवद्भिन्नो यो गुणादिस्तद्वृत्तिर्यः कपिसंयोगाभावस्तद्वति वृक्षे, एतद्वृक्षत्वस्य = एतद्वृक्षत्वात्मक हेतोः, वृत्तित्वात्=सत्त्वात् ।

अस्यायमाशयः। अधिकरणभेदेनापि अभावोभिद्यतेति मतं न प्रामाणिकमतः कपिसंयोग्ये-तद्वृक्षत्वादित्यादौ द्वितीयलक्षणेप्यव्याप्तिर्दुर्वारैव कपिसंयोगवद्भिन्नगुणादिनिष्ठकपिसंयोगाभावस्य वृक्षेऽपि सत्त्वेन तत्र हेतोः सत्त्वादिति ।

उक्ताव्याप्तिर्वारयितुं शक्यतेत्याशंक्य समाधत्ते न चेत्यादिना । साध्यवद्भिन्नेत्यादि= साध्यवद्भिन्नवृत्तित्वविशिष्टो यः साध्याभावस्तद्वदवृत्तित्वमित्यर्थः, वक्तव्यम्=वाच्यम्,एवं च सति= साध्यवद्भिन्नवृत्तित्वविशिष्टसाध्याभाववदवृत्तित्वस्य लक्षणार्थत्वे,वृक्षस्य=हेत्वधिकरणीभूतवृक्षस्य, विशिष्टाधिकरणत्वाभावात् =साध्यवद्भिन्न गुणादिवृत्तित्वविशिष्टकपिसंयोगाभावत्वावच्छिन्ना-धिकरणताया असत्त्वादिति न वाच्यमिति भावः।न वाच्यमित्यत्र युक्तिं दर्शयति साध्याभावेत्यादिना । साध्याभावपदवैयर्थ्यापत्तेः=लक्षणघटकसाध्याभावपदस्य व्यर्थत्वप्रसङ्गात्,साध्याभावपदाभावेकिंलक्षणं पर्यवस्यतीत्यत आह साध्यवद्भिन्नेत्यादि ,साध्यवद्भिन्नवृत्तित्वविशिष्टं यत् तद्वदवृत्तित्वमित्यस्य लक्षणार्थस्वीकारेणैवोक्तस्थलेऽव्याप्तिवारणसंभवात् । ननु पूर्वोक्ताव्याप्तिवारणेप्यसंभवोदुर्वार एवेत्यत - आह सद्धेताविति,सद्धेतौ= वह्निमान् धूमादित्यादौ,हेत्वधिकरणे=धूमादि हेत्वधिकरणपर्वतादौ, विशिष्टाधिकरणत्वाभावादेव=साध्यवद्भिन्नजलह्रदादिवृत्तित्वविशिष्ट द्रव्यत्वाधिकरणत्वस्य जलह्रदादावेव सत्त्वेन पर्वतादावसत्त्वादिति भावः ।

अस्यायमाशयः।घटवृत्तित्वविशिष्टद्रव्यत्वाधिकरणत्वं घट एव,तथा पटादिवृत्तित्वविशिष्ट द्रव्यत्वाधिकरणत्वमपि पटादावेव नान्यत्रेति नियमस्तथाच वह्निमान् धूमादित्यादौ वह्निम-द्भिन्नजलह्रदादिवृत्तित्वविशिष्ट द्रव्यत्वाधिकरणतायाः जलह्रदादावेव सत्त्वेन पर्वतादावभावात् कस्यापि दोषस्यासत्त्वेन लक्षणे साध्याभाव पदवैयर्थ्यं दुर्वारमेवेति ।

तृतीय लक्षणेऽपि दोषान्तरमस्तीति कथयति तृतीयेत्वित्यादिना । तृतीये = साध्यवत्प्रतियोगिका-न्योन्याभावासामानाधिकरण्यलक्षणेऽपि , साध्यवदित्यादि= साध्यवत्त्वावच्छिन्नप्रतियोगिताकान्योन्या-भावस्य पञ्चमलक्षणाभेदभिया निवेशमविधाय साध्यवत्प्रतियोगिकान्योन्याभावस्यैव, घटकत्वे= प्रवेशे, चालनीन्यायेन=चालनीतिनाम्ना प्रसिद्धोयोन्यायस्तेन, अन्योन्याभावमादाय= तत्तद्वृक्षत्त्यन्योन्याभावं

गृहीत्वा,नानाधिकरण साध्यके= नानाधिकरणानि यस्य तन्नानाधिकरणं साध्यं तत्र, वह्निमान् धूमादित्यादौ= वह्निमान् धूमादित्यादि सद्धेतौ, अव्याप्तिश्चेति= अव्याप्तिदोष प्रसङ्ग इति बोध्यम्।

अस्यायमाशयः । प्रथमलक्षणे चतुर्थलक्षणे च साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावो निवेशनीय एव,अन्यथा पूर्वोक्त दोषाणां दुर्निवार प्रसङ्गात् । तथाचेदं वाच्यं ज्ञेयत्वादित्यादौ स्वरूपसम्बन्धावच्छिन्न वाच्यत्वत्वावच्छिन्नप्रतियोगिताकाभावस्य कुत्राप्यसत्त्वेनाप्रसिद्धत्वात्तत्घटित लक्षणस्याप्यप्रसिध्या केवलान्वयिसाध्यकसद्धेतावव्याप्तिः। तथा द्वितीय तृतीय पञ्चम लक्षणेषु साध्यवत्त्वावच्छिन्नप्रतियोगिताक भेदस्यावश्यमुक्तदोषवारणाय प्रवेशनीयत्वादिदं वाच्यं ज्ञेयत्वादित्यादौ वाच्यत्ववानेत्याकारकस्य वाच्यत्ववत्त्वावच्छिन्नप्रतियोगिताकभेदस्यापि क्वाप्यसत्त्वेनाप्रसिद्धत्वात्तद्घटितलक्षणत्रयस्याप्यप्रसिध्याऽव्याप्तिरिति ।

अन्यत्सर्वं तत्र तत्र स्पष्टतया प्रतिपादितमिति विस्तरेणालम् ।

समाप्ता भास्करनाम्नी पञ्चलक्षणी माधुर्याष्टीका ।

आ.वेंकटरमणमूर्तिः
टीकायाः कर्ता ।
(4-3-1950)